ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED QUATERLY RESEARCH JOURNAL)

३७ वर्षे प्रथमोऽङ्कः ( जनवरीमासाङ्कः ) २०१२ ई०

प्रधानसम्पादकः
प्रो० उषारानीकपूर
कुलपतिः (प्रभारी)

सम्पादकः
प्रो० रमेशकुमारपाण्डेयः

सहसम्पादकः
डॉ० ज्ञानधरपाठकः



प्रकाशन-स्थलम्
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मानितविश्वविद्यालयः)
नवदेहली-११००१६

प्रकाशकः
**कुलपतिः,**
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मानित-विश्वविद्यालयः)
कुतुब इन्स्टीट्यूशनल एरिया,
नवदेहली-११००१६



ISSN :- 0974 - 8946

३७ वर्षे प्रथमोऽङ्कः (जनवरीमासाङ्कः) २०१२ ई०



मुद्रकः
**अमरप्रिंटिंगप्रैसः**
दिल्ली
amarprintingpress@gmail.com

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनु-सन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। तदर्थं द्वे प्रतिकृति प्रेषयितव्ये। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ,** नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# आत्मनिवदेन

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठ के शोध-प्रकाशन विभाग द्वारा प्रकाशित शोध-प्रभा शोधपत्रिका के प्रस्तुत अंक को पाठकों के समक्ष प्रस्तुत करते हुए मुझे हार्दिक प्रसन्नता हो रही है।

वस्तुतः अच्चशिक्षा में शोध की बड़ी भूमिका है। शोध द्वारा जहाँ वैज्ञानिक नवीन-नवीन यन्त्रों एवं प्रविधियों की खोज कर मानव जीवन की जटिलता को दूर करने का प्रयास करता है। वहीं दर्शनादि क्षेत्रों में शोध करने वाले विद्वज्जन नयी-नयी व्याख्याओं द्वारा मानव के ज्ञान को नया आयाम देते हैं।

आज के इस वैज्ञानिक युग में विज्ञान की सहायता से प्रत्येक क्षेत्र लाभान्वित हुआ है। फलतः शिक्षा का क्षेत्र भी इससे प्रभावित है। संगणक के प्रयोग से शोधकर्त्ता को कई प्रकार से लाभ पहुँचा है। आज सारे विश्व में चल रही शोध की योजनाओं एवं परिणाम से शोधकर्त्ता अपने संगणक से सीधी जानकारी प्राप्त कर लेता है जबकि कुछ वर्षों पहले यह कितना कठिन कार्य था। दूर देश में विद्यमान शोधसामग्री का सहजता से उपयोग करने का द्वार तो संगणक के माध्यम से उद्घाटित हुआ है। आजकल विद्यापीठ के छात्र अपनी शास्त्रीय परम्पराओं की रक्षा के साथ-साथ संगणक शिक्षा में भी रुचि रखते हैं, यह नितान्त प्रसन्नता की बात है।

प्राच्य विद्या के क्षेत्र में निरन्तर स्वाध्यायशील तत्त्वजिज्ञासुओं के लिए यह शोध-प्रभा निरन्तर उपादेय सिद्ध हो, यही मेरी कामना है।

**प्रो. उषा रानी कपूर**
कलपति (प्रभारी)

# सम्पादकीयम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभाख्या शोधपत्रिका विविधविषयगवेषणपूर्णानां निबन्धानां संग्रहं क्रोडीकृत्य विद्योततेतराम्। अनुसन्धानसरणिसम्पन्नानामाचार्याणां शोधार्थिनाञ्च शोधपूर्ण-निबन्धान् कलेवरीकृत्य संस्कृतवाङ्मयपरिपोषणे निमग्नेयम् आनन्दसागरे निमज्जयति विदुषो नितान्तम्।

अनुसन्धाने मौलिकं यत् कार्यम्भवति तदेव अनुसन्धानकर्त्तुः वैशिष्ट्यं प्रकाशयति, तदेव वस्तुतोऽवदानं योगदानं वा भवति कस्यचित् शोधकर्त्तुः। तदेवावदानमङ्गीकृत्य तत्तत्क्षेत्रे अनुसन्धानकर्त्तारो विषयविशेषज्ञाः तमुदाहरन्ति निर्दिशन्ति च तस्य सिद्धान्तं नवीनाख्यानं वा। अतो मौलिकतैवानुसन्धानतत्त्वेषु मूर्ध्नि स्थिता दृश्यते। तन्मौलिकत्वमपि प्रतिपादनकौशलमाश्रयते। अतः प्रतिपादननैपुणीमनादृत्य किमपि तत्त्वं सुष्ठुतया प्रतिष्ठितं न भवतीति धिया प्रतिपादनकौशलार्जने प्रयत्नशीला भवन्ति गवेषकाः। यत् वस्तुतः प्रतिपाद्यमस्ति यदि तस्य प्रतिपादनं सुष्ठु रीत्या न विधीयते तस्य प्रभावः विलम्बेन भवति अथवा प्रभाव एव न भवति। विज्ञापनात्मकेऽस्मिन् युगे नवीनस्य कस्यापि सर्वथा समुपादेयस्यापि वस्तुनो यावत् समीचीनं मनोभिरामम् अनितरसाधारणं किमपि विज्ञापनं नैव जायते तावत् तद्वस्तु न कोऽपि प्रयुनक्ति। किन्तु तदपेक्षया हीनस्यापि वस्तुनः मनोहर-विज्ञापनैः आकृष्टाः सहस्रशो जनाः तद्वस्तु प्रयुञ्जन्ति। तात्पर्यमिदमस्ति सुतरामुपादेयस्यापि वस्तुनः प्रतिपादनमपि सुष्ठुतयैव रीत्या करणीयं भवति। येन जनाः सहजतया तस्मात् शोधपरिणामाल्लाभान्विता भवेयुः।

प्रस्तुतीकरणं शोधस्य वस्तुतः प्रविधिमपेक्षते। अयं विधिरेव आङ्ग्लभाषाविद्भिः टेकनीक (Tachnique) पदेनोच्यते। शोधकार्ये सम्प्राप्तानां परिणामानां समुचितमनुशीलनं विधाय सुव्यवस्थितया शोधप्रबधो निबन्धो वा निर्मातव्यः। शोधबन्धसमुपस्थापने प्रायः त्रयो बन्धाः कल्पिता भवन्ति – पूर्वबन्धः, मुख्यबन्धः, पश्चबन्धश्च। पूर्वबन्धे भूमिका, विषयानुक्रमणिका, सङ्केतसूच्याऽदयो विषयाः भवन्ति। मुख्यबन्धे समग्रस्य अनुसन्धानकार्यस्य अध्यायानुसारिणी प्रस्तुतिः अपेक्षिता भवति। पश्चबन्धे च परिशिष्टानि भवन्ति तदन्तर्गतत्वेन ग्रन्थसूच्यादयो विषयाः समुपनिबद्धाः भवन्ति।

शोधप्रभाया अस्मिन्नङ्के विविधविषयविश्लेषपरा त्रयोदश लेखाः प्रकाश्यन्ते। एवं प्रतिभाविशेषोद्-भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रियः संवर्धनार्थमभ्यर्थये सुमनसः विदुषः।

**प्रो. रमेशकुमारपाण्डेयः**

सम्पादकः

# विषयानुक्रमणिका

## संस्कृतविभागः



## हिन्दी विभाग

# लेखकसूची


१. **डॉ. हरिनारायणतिवारी,** एसोसिएट प्रोफेसर, व्याकरणविभागे, राष्ट्रियसंस्कृतसंस्थानम्, जम्मूपरिसरः जम्मू।

२. **डॉ. देवानन्दशुक्लः,** कार्यक्रमाधिकारी, महर्षिसान्दीपनिराष्ट्रियवेदविद्याप्रतिष्ठानम् अधिकरणभवनम्, भरतपुरी, उज्जयिनी-४५६०१० म.प्र.

३. **सङ्गीता कुमारी,** शोधछात्रा व्याकरणविभागे, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली-१६

४. **डॉ. सत्येन्द्रपाण्डेयः,** शोधछात्र साहित्यविभागे, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली-१६

५. **डॉ. कमलेशमिश्रः,** स्नातकोत्तरन्यायदर्शनविभागाध्यक्षः, श्रीजगन्नाथसंसकृतविश्वविद्यालयः, श्रीविहारः पुरी, उडीसा

६. **स्वामी डॉ.अनुभवानन्दः,** गीतामन्दिरम् अम्बालाकैण्टः, हरियाणा

७. **सुनीता कुमारी नागर,** शोधछात्रा सांख्योगविभागे, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली-१६

८. **डॉ. परमानन्दभारद्वाजः,** सहायकप्रोफसर ज्योतिषविभागे, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृत- विद्यापीठम्, नवदेहली-१६

९. **श्री सुभाषचन्द्रमिश्रः,** अतिथिसहायकप्रोफसर ज्योतिषविभागे, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृत-विद्यापीठम्, नवदेहली-१६

१०. **डॉ. देशबन्धुशर्माः,** संस्कृतशिक्षकः, राजकीयोच्चमाध्यमिकबालविद्यालयः दिल्ली

११. **डॉ. हेतरामकच्छवाहः,** प्राचीनराजशास्त्रार्थशास्त्रविभागाध्यक्षः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः वाराणसी, उ.प्र.

१२. **डॉ. राजमङ्गल यादव,** सहायकप्रोफेसर संस्कृतविभाग, देशबन्धू महाविद्यालय, कालकाजी, दिल्ली

१३. **डॉ. सर्वेन्द्र कुमार,** सहायक प्रोफेसर संस्कृत विभाग, कमलानेहरु महाविद्यालय, दिल्ली

# अर्थनिश्चये वैयाकरणानां सरणिः

**डॉ. हरिनारायणतिवारी**

वृत्तिपदव्यवहार्य्यत्वरूपा अर्थपदोभयनिरूपितसम्बन्धत्वरूपा वृत्तिस्त्रिधा 1 शक्तिः 2 लक्षणा 3 व्यञ्जना च। तत्र शक्तिः कः पदार्थः इति जिज्ञासायां बोधजनकतारूपा इति प्राचीना वैयाकरणाः, नैयायिकास्तु, अस्माच्छब्दादयमर्थो बोध्यः इत्याकारा, इदं पदमिममर्थं बोधयतु इत्याकारा वा ईश्वरेच्छा शक्तिरिति स्वीकुर्वन्ति। परन्तु बोधजनकताघटितेश्वरेच्छारूपाः सैव बोधजनकत्वस्यावच्छेदिका, अतः आत्माश्रयग्रस्तत्वान्मतद्वयमुपेक्ष्य पदपदार्थयोः सम्बन्धान्तरमेव वाच्यवाचकभावापरपर्यायरूपां शक्तिं नव्या नागेशादयः स्वीकुर्वन्ति। शक्तिज्ञापकञ्च इतरेतराध्यासमूलं तादात्म्यं मन्वते। तच्च सङ्केतः। ''ननु अस्माच्छब्दादयमर्थो बोधब्यः'' इत्याद्याकारकेच्छाद्यात्मकत्वेनैव सङ्केतस्य प्रसिद्धत्वात्तादात्म्यं सङ्केत इत्यसङ्गतमिति चेद्? न, शाब्दबोधोपपत्तये कल्प्यमानस्य सङ्केतस्य विनिगमनाविरहेण तादात्म्य-रूपत्वस्यापि सम्भवात् ''सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूपः "इति भाष्यकृता स्वीकृतत्वाच्च। इतरेतराध्यासरूपः इतरेतराध्यासो रूप्यते बोध्यतेऽनेनेति करणे घञ् प्रत्ययः। ननु अनेन अध्यासरूपत्वमेव लभ्यते सङ्केतस्य, न तु अध्यासमूलकत्वमिति चेद्? न करणघञन्तरूपशब्देन अध्यासो रूपं बोधकं यस्येति बहुव्रीहिणा अध्यासबोधकत्वस्य लाभात्। अथवा करणे घञेऽगतिकगतित्वात् कर्मघञन्तरूपशब्दस्य अध्यासशब्देन सह तृतीयातत्पुरुषेऽभिप्रेतार्थलाभसम्भवात् तदपि साधु। तावताऽपि बहुव्रीहिं विना अभिमतार्थसिद्ध्या अन्यपदार्थत्वकल्पनायां गौरवमपि। अतो वैयाकरणाभिमतं सङ्केतस्वरूपम्- ''योऽयं शब्दः सोऽर्थः स शब्दः" इति। शब्दार्थयोः परस्परं सङ्केतः पाणिन्याद्याप्तनिमामकस्यैव न त्वाधुनिकसङ्केतस्य। ननु पाणिन्यादिकर्तृकसङ्केतस्यैव सम्बन्धस्वीकारे जातस्य द्वादशेऽह्नि क्रियमाणनामस्थलेऽसम्बन्धत्वमिति चेद्? न, जातस्य पुत्रस्य द्वादशेऽह्नि पिता नाम कुर्यादिति स्मृत्या तद्विषये तस्याप्तत्वात् तथा चाह नागेशः-एवञ्चाधुनिकसङ्केतस्थले द्वादशेऽह्नि क्रियमाणनामस्थले च लक्षणा। तत्र घटगोविन्दादिगुणाद्यारोपेण तन्मूलकतत्प्रवृत्तिनिमित्तारोपेण च बोधः। पदपदार्थयोः तादात्म्यम्-तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम्। वास्तविकः भेदः, आरोपितः अभेदः, अतस्तटे गङ्गात्वारोपेऽपि न हि तेन स्नानादिकार्यं जायते, तद्वदत्रापि नहि शब्देन अर्थव्यवहारः अर्थेन वा शब्दव्यवहारः। वैयाकरणनये बौद्धशब्दः बौद्धः एव अर्थश्च तयोरभेदान्वयः अध्यस्तः। अतो न अग्निशब्दोच्चारणे मुखदाहकत्वापत्तिः, गुडशब्दोच्चारणे च माधुर्यं नास्वाद्यते।

**शब्दस्यानेकार्थकत्वम्–**

विद्वन्निकाये बहवः सम्प्रदायाः प्रचलिताः सन्ति। सम्यक् प्रकर्षेण दीयते गुरुणा शिष्यायेति सम्प्रदायस्य सम्प्रदायत्वम् तत्र नहि केवलमर्थभेदः अपि तु उच्चारणभेदोऽपि वर्तते। तद्यथा भगवान् भाष्यकारः–छन्दोगानां सात्यमुग्रिराणायनीया अर्धमेकारमर्धमोकारं चाधीयते–सुजाते एश्वसुनृते, अध्वर्यो ओद्रिभिः सुतम् शुक्रं ते एन्यत्, यजतं ते एन्यदिति। पारिषदकृतिरेषा तत्र भवताम्। नैव लोके नान्यस्मिन्वेदेऽर्ध एकारोऽर्ध ओकारो वास्ति इत्यनेन एकस्यैव वर्णस्य यथा उच्चारणभेदो दृश्यते, तथैव अर्थभेदोऽपि। एक एव गुणशब्दः पाणिनीयसम्प्रदाये अत् एङ् पदे शक्तः, नैयायिकनिकाये च चतुर्विंशतिः गुणाः साङ्ख्यनये सद्रजस्तमस्सु शक्तः इत्यादि। तत्र तत्र एकस्यैव गुणपदस्य भिन्नो भिन्न अर्थः। शब्दस्य बहवः प्रयोगविषयः वेदादयः स्थानानि च सन्ति। तत्र तत्र एक एव शब्दोऽनेकासु भाषासु नैकस्मिन्नर्थे प्रयुज्यते। तथा चाह भाष्यकारः–एतस्मिंश्चाति महति शब्दप्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते। शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति, विकार एवैनमार्या भाषन्ते शव इति। हम्मतिः सुराष्ट्रेषु रहतिः प्राच्यमध्येषु गमिमेव त्वार्याः प्रयुञ्जते। दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु इति शव् धातोस्तिङन्तप्रयोगः कम्बोजेषु आर्यास्तु कृदन्ते हम्म् धातुः सुराष्ट्रेषु, रंह्धातुः प्राच्यमध्येषु। एष्वेवार्थेषु आर्या गम्धातुं प्रयुञ्जते। तिङन्तो दा धातुश्छेदने प्राच्यैः कृदन्तः उदीच्यैरिति भाष्यतात्पर्यम्। तत्र तेषु तेष्वर्थेषु तस्य तस्य पदस्य शक्तत्वं स्वीक्रियते।

**व्याकरणादितः शब्दार्थनिर्णयः–**

> **शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।**
> **वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥** इति

श्रूयते तत्र धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहः व्याकरणाद् भवति। यथा लः कर्मणि च भावे चाकर्मकेभ्यः' इत्यनेन लकारस्य कर्मणि कर्तरि भावे च शक्तिः स्वीक्रियते। फलव्यापारौ च धात्वर्थौ इत्यादयोऽर्थाः व्याकरणैर्निर्णीयन्ते। उपमानाद् यथा गोसदृशः गवयपदार्थः। आप्तवाक्याद् शक्तिग्रहः यथार्थवक्ता आप्तः। आप्तो नामानुभवेन वस्तुतत्त्वस्य कार्त्स्येन निश्चयवान् रागादिवशादपि नान्यथावादी यः स आप्तः इति मञ्जूषायां नागेशः। भोपूगदमरकोशादेः बोधः। व्यवहारतश्चापि बोधः। तद्यथा– प्रयोजकवृद्धेन ''घटमानय इत्युक्ते घटमानयन्तं प्रयोज्यवृद्धं पश्यता बालेनानुमीयते'' अयं प्रयोजकवृद्धः घटानयनं मत्कार्यम्'' इति ज्ञानवान् घटानयनविषयकचेष्टावत्त्वात्। ततः प्रयोज्यवृद्धज्ञानं ''घटमानय'' इति वाक्यजन्यं तद्वाक्यश्रवणाव्यवहितोत्तरमेव तत्प्रवृत्तेः इत्यनुमानेन ज्ञानजनकत्वं वाक्ये निश्चीयते। तत आवापोद्वापाभ्यामन्वयव्यतिरेकेण पदादिष्वपि पदार्थविषयकबोधजनकत्वं निर्धायते। वाक्यशेषादपि शक्तिग्रहः। यवमयश्चरूर्भवतीत्यत्र आर्याः यवशब्दं दीर्घशूके प्रयुञ्जते तमेव च बुध्यन्ते। अनार्यास्तु प्रियङ्गौ प्रयुञ्जते तमेव च बुध्यन्ते। तत्र यवपदस्य क्व शक्तिरिति जिज्ञासायाम्– यदाऽन्या ओषधयो

म्लायन्ते तदा एते मोदमानास्तिष्ठन्ति।

> **वसन्ते सर्वसस्यानां जायते पत्रशातनम्।**
> **मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः॥**

इति वाक्यशेषाद् दीर्घशूके शक्तिर्निर्णीयतो प्रियङ्गौ तु शक्तिभ्रमाद् बोधः। आर्यप्रसिद्धेर्बलवत्त्वाद् वेदे दीर्कशूकपरतैवेति सिद्धान्तितम्। अतोऽनार्यैरपि वेदे दीर्घशूकपरतैव, अयज्ञे प्रियङ्गव एवोपादेया इति निर्णीयते।

एवं विवरणादपि शक्तिग्रहः। विवरणं तु तत्समानार्थकपदान्तरेण तदर्थकथनम्। यथा घटोऽस्तीत्यस्य कलशोऽस्तीत्यनेन विवरणाद् घटपदस्य कलशे शक्तिग्रहः।

एवं प्रसिद्धपदस्य सानिध्यादपि अर्थावग्रहः। तद्यथा-इह सहकारतरौ मधुरं पिको रौतीत्यादौ पिकपदमन्तरा पदान्तरार्थस्य ज्ञातुः पुंसः सान्निध्यात् पिकपदस्य कोकिले शक्तिग्रहः।

**अनेकार्थकेषु अर्थनिश्चये हेतवः—**

सन्ति किल शब्दा नानार्थकाः। यथा सैन्धवपदं लवणेऽश्वे चार्थद्वये शक्तम्। सैन्धवमानय, इत्यत्र न ज्ञायते अश्वमानय लवणं वा, सैन्धवपदस्य द्व्यर्थकत्वात्। तत्र नावार्थकेषु शब्देषु संयोगादिभिः शक्तिः नियम्यते। तथा चाह भर्तृहरिः—

> **संयोगो विप्रयोगश्च साहचर्यं विरोधिता।**
> **अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥**
> **सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।**
> **शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥** इति

एते संयोगादयः शब्दार्थस्यानवच्छेदे सन्देहे तदपाकरणद्वारेण विशेषस्मृतिहेतवः निर्णयहेतवः भवन्ति। यथा धेनुः नवप्रसूता इत्युच्येत। सा काचित् स्त्री महिषी, गौः अजा, अश्वा इत्यादयः। सवत्सा धेनुरानीयतामित्युक्ते वत्ससाहचर्येण धेनुपदं गोबोधकम्। विप्रयोगाद्यथा- अवत्सा धेनुरानीयतामित्युक्ते विप्रयोगाद् धेनुपदं गोबोधकम्। साहचर्याद् यथा रामलक्षणौ इत्यत्र दाशरथी गृह्येते, न तु जामदग्निः, बलरामो वा दुर्योधनापत्यं वा लक्ष्मणः। साहचर्यम् सादृश्यम्, सदृशयोरेव सहप्रयोगनियमात्। ''रामार्जुनगतिस्तयोः इति कस्यचिदुपमायां सदृशलक्षणया विरोधात् भार्गवकार्तवीर्ययोरेव विरोधितया बोधः। ''अञ्जलिना जुहोति'' अञ्जलिना सूर्यमुपतिष्ठते, जुहोत्यादिपदार्थवशाद् हवनकालेऽन्याकृतिक उपस्थानकालेऽन्याकृतिकः इति अञ्जलिपदस्य तत्तदाकाराञ्जलिपरत्वम्। तत्रार्थवशाद् बोधः। प्रकरणं प्रसङ्गस्तस्मादपि बोधः। यथा सैन्धवमानय इत्युक्ते भोजनकाले लवणमानय, यात्राकाले च अश्वमिति निर्णयः। प्रसङ्गादपि निर्णयः। यथा— ''अक्ताः शर्करा उपदधाति इत्यत्र यद्यपि अक्तपदं सामान्यत

उपादानात् तैलघृतोभयाञ्जनपरकं, तथापि तेजो वै घृतम् इति वाक्येन तेजःपदस्य तेजोवर्धके लक्षणया घृतस्तुतिरूपाल्लिङ्गाद् अक्तपदं घृतकरणकाञ्जनकर्मतामेव शर्करां बोधयति। शब्दस्यान्यस्य सन्निधेरुदाहरणम्-''रामो जामदग्न्य इत्यत्र जामदग्न्यपदसन्निधानाद् रामो भार्गव एव प्रतीयते, न तु दाशरथिहलधरौ। सामर्थ्याच्छक्तिनिर्णयः। तद्यथा-'अभिरूपाय कन्या देया' इत्यत्र कन्या देयेति कथनेन वराय सुन्दरायेति लभ्यते। न तु अभिरूपाय पशवे मृण्मयाय विग्रहायेति सामर्थ्यात् प्रतीयते। औचित्यादपि शक्तिनिर्णयः। तद्यथा-

**यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा।**
**यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः॥**

इत्यौचित्यात् परशुना छिनत्ति मधुसर्पिषा सञ्चिति, गन्धमाल्याद्यैः पूजयति इति निर्णीयते। देशादपि अर्थनिर्णयः। तद्यथा-भात्यत्र परमेश्वरः इत्यत्र राजधानीरूपदेशात् परमेश्वरे राजा बोध्यते। कालादपि अर्थावग्रहः। यथा चित्रभानुर्भाति इत्यत्र चित्रभानुर्विरोचनः, चित्रभानुर्विभावसुः इयमरबला-च्चित्रभानुपदं यद्यपि अग्निसूर्योभयशक्तं तथापि रात्रिरूपकालादग्नेर्बोधकम्, दिवारूपकालज्ञानात् सूर्यस्य बोधकमिति निर्णीयते। व्यक्तेरपि शक्तिनिर्णयः। यथा-मित्रो भाति मित्रं भाति इत्यत्रानेकार्थकोशबलाद् मित्रपदं यद्यप्युभयार्थबोधकं तथापि पुंल्लिङ्गनिर्देशात् सूर्यार्थबोधकम्, क्लीबनिर्देशात् सुहृद्बोधकम् इति व्यक्तेरर्थनिश्चयः।

स्वरादपि अर्थावगतिः। याज्ञिकाः पठन्ति स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत तत्र स्थूलपृषती, स्थूला चासौ पृषती च स्थूलपृषती कोऽत्रार्थः इति स्वरान्निर्णीयते। यदि पूर्वपदप्रकृतिस्वरत्वं तथा बहुव्रीहिः, अथाऽन्तोदात्तत्वं तदा तत्पुरुषः।

स्वरादयः इत्यत्र आदिपदात् षत्वणत्वे गृह्येते। तद्यथा सुसिक्तमित्यत्र पूजार्थकस्य सोर्ग्रहणे 'सुः पूजायाम्' इति कर्मप्रवचनीयसंज्ञायां जातायामनुपसर्गत्वात् षत्वं न भवति। सुषिक्तमित्यत्रोपसर्गत्वे षत्वं भवति। प्रणायकः इत्यत्रोपसर्गत्वे णत्वम्। प्रनायक इत्यत्र प्रगतनायकदेश इत्यर्थे न णत्वम् एवं सन्देहे सति एतैः हेतुभिरर्थावग्रहं कुर्वन्ति इति।

# पाणिनीयधातुपाठवृत्तिविमर्शः

**डॉ. देवानन्दशुक्लः**

व्याकरणशास्त्रे पञ्चानामङ्गानां परम्परा दृश्यते। अत एव पञ्चाङ्गं व्याकरणम् इत्यपि प्रथितम्। पञ्च अङ्गानि इमानि सन्ति—सूत्रपाठः धातुपाठः गणपाठः उणादिपाठः लिङ्गानुशासनञ्चेति।

एतेषु पञ्चसु अङ्गेषु धातुपाठः अतिमहत्वपूर्णं स्थानं भजते। प्रायेण संस्कृतशब्दाः व्युत्पन्नाः इति प्रसिद्धा परम्परा। प्रायेण सर्वेषां शब्दानां व्युत्पत्तिः धातुभिः एव प्रदर्श्यते। उच्यते च – सर्वं च नाम धातुजमाह। अत एव संस्कृतव्याकरणे धातूनां महत्त्वं सर्वथा अतिशेते।

संस्कृतवाङ्मये पाणिनेः शब्दानुशासनं पञ्चभिः अवयवैः परिपूर्णं समुपलभ्यते। पाणिनीयव्याकरणसम्प्रदाये यः धातुपाठः पठनापाठनयोः समुपयुज्यते सः पाणिनिप्रोक्तः इति बहुभिः वैयाकरणैः मन्यते। यद्यपि न्यासकारः जिनेन्द्रबुद्धिः पाणिनीयसम्प्रदाये प्रचलितधातुपाठस्य पाणिनिप्रोक्तत्वं नैव स्वीकरोति।

संस्कृतवाङ्मये पाणिनेः शब्दानुशासनं पञ्चभिः अवयवैः परिपूर्णं समुपलभ्यते। पाणिनीयव्याकरणसम्प्रदाये यः धातुपाठः पठनपाठनयोः समुपयुज्यते सः पाणिनिप्रोक्तः इति बहुभिः वैयाकरणैः मन्यते। यद्यपि न्यासकारः जिनेन्द्रबुद्धिः पाणिनीयसम्प्रदाये प्रचलितधातुपाठस्य पाणिनिप्रोक्तत्वं नैव स्वीकरोति। किञ्च व्याकरणशास्त्रेतिहासकाराः अन्ये च विद्वांसः जिनेन्द्रबुद्धेः मतमेतन्नाद्रियन्ते। सम्प्रति पाणिनीयधातुपाठनाम्ना प्रसिद्धः धातुपाठः पाणिनिना प्रोक्तः इत्येव सिद्धान्तः मन्यते।

**पाणिनीयधातुपाठः** सूत्रपद्धत्या विरचितः। यथा पाणिनीयशब्दानुशासने विधिनिषेधादिप्रकाराणां सूत्रानुसारः निर्देशः वर्तते तथैव पाणिनीयधातुपाठेऽपि वर्तते। यथा—

| | |
|---|---|
| भू सत्तायाम् | अयं विधिः। |
| न कम्यमिचमाम् | अयं निषेधः। |
| राधोऽकर्मकाद्वृद्धावेव | अयं नियमः। |
| स्वादयः ओदितः | अयमतिदेशः। |

घटादयो मित: इयं संज्ञा।

अदन्ता: अयमधिकार:।

सूत्रेषु अनुवृत्त्यनुकर्षणाय चकार: प्रयुक्त:। विकल्पविधानार्थं वा शब्द: प्रयुक्त: यथा आधृषाद्वा।

धात्वर्थनिर्देशकसूत्राणां वर्गत्रयं दृश्यते– प्रथमवर्गे एकस्य अनेकेषां वा धातूनां विभक्तिं विना पाठ: कृत:। अर्थनिर्देशस्तु सप्तम्यन्तपदेन कृत:। केचन धातव: सूत्रेषु सविभक्तिका: निर्दिष्टा: यथा राधोऽकर्मकाद्वृद्धावेव भुवोऽकल्कने, कृपेस्तादर्थ्ये। केषुचित् सूत्रेषु पूर्वमर्थं विचार्य पश्चात् सविभक्तिकधातुप्रयोग: कृत: यथा मारणतोषणनिशामनेषु ज्ञा कम्पने चलि: जिह्वोन्मथने लडि:। केषुचित् सूत्रेषु पदक्रम: वर्तते तथाहि पूर्वमुपसर्गप्रयोग: पश्चाद्धातुप्रयोग: पश्चादर्थनिर्देशश्च यथा–आङ: शासु इच्छायाम्। केचन धातव: नैकेषु गणेषु पठिता:। तत्र इमे हेतव: स्यु:। प्रथम: हेतु: धातु: समानार्थक: किञ्च रूपे भेद: यथा पुष पुष्टौ धातु: तत्र भ्वादौ पोषति इति रूपम्। दिवादौ पुष्यति इति क्र्यादौ पुष्णाति इति रूपं भवति। अत्र रूपभेद: वर्तते परञ्च एक एवार्थ:। द्वितीय: हेतु: अर्थभेद: रूपभेदश्च। यथा विदधातु: अदादिगणीय: विदधातो वेत्ति इति रूपम्। तत्र ज्ञानार्थे विदधातु प्रयुक्त:। तथैव दिवादौ विदधातो: विद्यते इति रूपम्। तत्र सत्तार्थक: विदधातु: रुधादौ विन्ते इति रूपम् तत्र विचारणार्थ: विदधातु:। तृतीयो हेतु: स्वरभेद: यथा षद्लृधातु: तस्य भ्वादौ सीदति इति रूपम् तत्राद्युदात्तस्वर: तुदादौ मध्योदात्तस्वर:। इतोऽपि नैकविशिष्ट्यप्रयुक्त: पाणिनीयधातुपाठ: दिङ्मात्रमेवात्र उद्धृत:।

आचार्यपाणिने: धातुप्रवचनकालादारभ्य अद्यावधि अनेकै: आचार्यै: पाणिनीयं धातुपाठम् आश्रित्य वृत्तय: कृता:। किन्तु तासु काश्चन एव इदानीमुपलभ्यन्ते। अनेकासां नामान्यपि अज्ञातानि। अत्र परिज्ञाता: वृत्तिकारा: वृत्तयश्च उद्ध्रियन्ते–

**पाणिनि:** स्वयमपि पाणिनीयधातुपाठस्य व्याख्याता वर्तते। स: अष्टाध्यायीसूत्राणां कामपि वृत्तिम् अवश्यमेव विनिर्दिष्टवान्। वृत्तिं विना सूत्रग्रन्थस्य प्रवचनं सर्वथा अशक्यम्। इमां परम्परां मनसि निधाय आचार्यसायण: अलिखत्–

अस्माकं तूभयमपि प्रमाणम् उभयथा शिष्याणां प्रतिपादनात्।

क्षीरस्वामिनापि लिख्यते।

वक्ष्यति च–

पाठमध्येऽनुदात्तनामुदात्त: कथित: क्वचित्। अनुदात्तेऽप्युदात्तानां पूर्वेषामनुरोधत:।

अत्र वक्ष्यति क्रियायाः कर्ता कः, एतत् क्षीरस्वामिना न स्पष्टीकृतम्। क्षीरस्वामिनः वाक्यविन्यासप्रकारेण अनुमीयते यत् क्षीरस्वामिनः दृष्टौ वक्ष्यति क्रियायाः कर्ता भगवान् पाणिनिरेव। अनेन ज्ञायते यत् पाणिनिः एव धातुपाठस्य प्रवचनम् अकरोत् तस्यार्थावबोधनाय वृत्तिमपि अलिखत्।

**आचार्यसुनागः** पाणिनीयधातुपाठस्य व्याख्यानम् अकार्षीत् इति कतिपयप्रमाणैः ज्ञायते। यथा कशिकायां 'विभाषा भावादिकर्मणोः' इति सूत्रव्याख्यायाम् आचार्यवामनेन लिख्यते–

सौनागाः कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन अस्यतेर्भावे।

एतदेव सौनागमतम् आचार्यसायणेन अनेकेषु स्थलेषु निर्दिष्टम्। क्षीरतरङ्गिण्याम् आदौ अन्ते च धात्वर्थसम्बद्धसौनागमतमुद्धृतमस्ति।

**भीमसेनः** पाणिनीयधातुपाठोपरि कञ्चिद्वृत्तिग्रन्थं व्यरचयत्। पक्षेऽस्मिन् अनेकानि प्रमाणानि सन्ति। यथा–

अत्र आचार्यहेमचन्द्रः हैमशब्दानुशासनस्य बृहद्वृत्तौ लिखति – अन्ये त्वदि्ट पठन्ति।

अस्य स्वोपज्ञबृहन्न्यासेत्याख्यायां व्याख्यायाम् आचार्यहेमचन्द्रेणोद्धृतम् – अन्ये त्विति भीमसेनादयः।

कविकल्पद्रुमटीकायां दुर्गादासः लिखति – स्तम्भ इह क्रियानिरोधः इति भीमसेनः।

दैवग्रन्थव्याख्याता कृष्णलीलाशुकमुनिः उद्धरति – क्षप प्रेरणे भीमसेनेन कथादिष्वपठितोऽप्ययं बहुलमेतन्निदर्शनम् इत्युदाहरणत्वेन धातुवृत्तौ पठ्यते।

उपर्युक्तपाठे 'धातुवृत्तौ पठ्यते' इत्यस्य कर्ता भीमसेनातिरिक्तः अन्यः न भवितुमर्हति। अनेन स्पष्टीभवति यत् भीमसेनः कञ्चन धातुवृत्तिव्याख्यान-ग्रन्थमलिखत्।

**पारायणनामकः** कश्चन ग्रन्थः धातुपाठमाश्रित्य लिखितः आसीदिति विविधेषु ग्रन्थेषु उद्धरणेन ज्ञायते। तथाहि काशिकायाः आरम्भे – 'नामधातुपारायणादिषु' इति लभ्यते

ज्ञापकसमुच्चये – ततः अभ्र बभ्रेति ----------- बाबभ्र्यते भवतीति पारायणिकाः।

पुरुषकारे – अनिदित् पारायणेष्वपाठि, गोजति जुगोज।

**नन्दिस्वामिनाऽपि** धातुपाठमाश्रित्य एका व्याख्या अकारि। क्षीरस्वामिना क्षीरतरङ्गिण्यां नैकेषु स्थलेषु नन्दिधातुपाठः उद्धृतः। क्षीरतरङ्गिण्यां 'नन्दीस्वामिनौ' इति पाठः समुपलभ्यते। अस्य पाठान्तरं 'नन्दीस्वामी' अपि वर्तते। दैवव्याख्यानपुरुषकारे सुधाकरस्य उद्धृतः यः पाठः यत्र 'नन्दीस्वामी' इति निर्देशः विद्यते।

**राजश्रीधातुवृत्तेः** एकः पाठः सर्वानन्देनाऽपि अमरटीकासर्वस्वे उद्धृतः 'दीर्घत्वे सूक्षणमिति राजश्रीधातुवृत्तिः' संभाव्यते यत् राजश्रीधातुवृत्तेः लेखकः राजश्री एव।

**नाथीयधातुवृत्तिः** अपि पाणिनीयधातुपाठमाश्रित्य काचन वृत्तिः आसीत्। नाथीयधातुवृत्तेः विवरणं सर्वानन्दकृते अमरटीकासर्वस्वे प्राप्यते–

**'नाथीयधातुवृत्तावपिकोषवन्मूर्धन्यषत्वं तालव्यत्वं चोक्तम्।'**

नाथीयधातुवृत्तेः लेखकस्य नाम अज्ञातः। पदैकदेशन्यायेन रमानाथविरचितधातुवृत्तिः 'नाथीय' इति नाम्ना व्यवहर्तुं शक्यते परन्तु रमानाथस्य कालः वि.सं. १५९३ अस्ति। अतः अस्याः धातुवृत्तेः सम्बन्धः रमानाथेन सह भवितुं नार्हति। कश्चन अन्यः एव अस्याः वृत्तेः कर्ता स्यात्।

**कौशिकः** इति नाम्ना कस्यचित् धातुवृत्तिकारस्य मतानि क्षीरस्वामिना क्षीरतरङ्गिण्याम् अनेकेषु स्थलेषु उद्धृतानि। उद्धरणैः प्रतीयते यत् कौशिकस्य वृत्तिः पाणिनीयधातुपाठोपरि एव लिखिता भवेत्।

**क्षीरस्वामी** पाणिनीयधातुपाठस्य औदीच्यपाठोपरि क्षीरतरङ्गिणी नामकम् एकं वृत्तिग्रन्थम् अलिखत्। अनेन महाभागेन क्षीरतरङ्गिण्याम् अमरकोशोद्घाटने च स्वस्य विषये किमपि न वर्णितम्। क्षीरस्वामी स्वजन्मना भारतस्य कं प्रान्तं, नगरं ग्रामं वा अलञ्चकार, अस्मिन् विषयेऽपि किमपि न समुपलभ्यते। क्षीरतरङ्गिण्याः अमरकोशस्य च आरम्भे वाग्देव्याः श्लाघावर्णनेन क्षीरतरङ्गिण्याः अन्ते दृश्यामानेन श्लोकेन च प्रतीयते यत् सः कश्मीरवासी स्यात्। यद्यपि क्षीरस्वामिनः कालविषये निश्चयेन किमपि वक्तुं न शक्यते तथापि विद्वद्भिः विषयेऽस्मिन् विचारणा कृता। केषाञ्चित् मते अस्य कालः संवत् ११०० इति भवेत्। केचिदन्ये आहुः यत् क्षीरस्वामी १११० विक्रमी संवततः पूर्ववर्ती इति।

**मैत्रयरक्षितनाम्ना** बौद्धविदुषा धातुपाठोपरि धातुप्रदीपनाम्नी एका लघुवृत्तिः विरचिता। एतेषां जन्मस्थानकुलदेशकालादिविषये किञ्चित् प्रामाणिकरूपेण न प्राप्यते। अनुमीयते यत् एषः बङ्गदेशनिवासी आसीत् इति अस्य ग्रन्थलेखनकालः ११४०-११६५ ई. स्यादिति।

**हरियोगिना** विरचिता धातुपाठस्य वृत्तिः शाब्दिकाभरणम् इति नाम्ना प्रसिद्धा। हरियोगी पुरुषकार-लीलाशुकमुनेः प्राग्वर्ती विक्रमस्य १२ शतके आसीदिति व्याकरणशास्त्रेतिहासग्रन्थे प्रतिपादितम्।

एषा धातुवृत्तिः प्रकाशितेभ्यः दैव-पुरुषकार-माधवीयाधतृवृत्ति-प्रभृतिग्रन्थेभ्यः प्राचीना। अस्याः वृत्तेरुल्लेखः पुरुषकार-माधवीयाधातुवृत्त्यादिग्रन्थेषु बहुत्र वर्तते तद्यथा–

पुरुषकारे शाब्दिकाभरणकर्तुः हरियोगिनः उल्लेखः

१. श्रातेरनुकरणमिति हरियोगी।[१]

२. हरियोगी तु अत्र 'संज्ञापूर्वो विधिरनित्यः इत्येतदाश्रित्य क्षेणोतीत्युदाहर्षीत्।[२]

३. धनपाल-हरियोगि-पूर्णचान्द्रास्तु दरतीत्येवाहुः।[३]

४. रुट लुट इति हरियोगी।[४]

माधवीयाधातुवृत्तौ शाब्दिकाभरणस्य हरियोगिनश्चोल्लेखः

१. शाब्दिकाभरणे तु गुण एवोदाहृतः।[५]

२. रुट लुट इति लुठ प्रतीघाते-----------हरियोगिनस्तु आद्यावेव।[६]

सिद्धान्तकौमुद्याम् आभरणकारस्योल्लेखः

णिसि चम्बने। आभरणकनस्तु इति तालव्यान्तः इति बभ्राम।[7] शब्दकौस्तुभे आभरणकारस्योल्लेखः

**१. अत्राभरणकारः** - गुपादिसूत्रे गुप्तिज्किन्मानित्युपक्रम्य गुपादिष्वनुबन्धकरणमात्मनेपदार्थमिति भाष्ये वार्तिके चोक्तत्वात्कितिः परस्मैपदिषु पठितोऽप्यात्मनेपदी बोध्यः। न च गुपादिष्विति बहुवचनं वक्ष्यमाणमान्बधाद्यपेक्षमिति वाच्यम्, भाष्ये विशिष्य कितेरप्युपक्रमादित्याह एतदनुसारी वर्तमानोऽपि 'स्वाश्रयं कश्चिकित्सतु' इति खण्डनस्य व्याख्यावसरे 'चिकित्सतामिति तु युक्तम्' इत्याह।[८]

लीलांशुकमुनिविरचितदैवव्याख्याने पुरुषकारेऽस्य नामोल्लेखः उपलभ्यते। अत एव हरियोगी पुरुषकार-लीलाशुकमुनेः प्राग्वर्ती विक्रमस्य १२ शतके आसीदिति प्रतीयते।

श्रीहरियोगिनो वंशादिवृत्तं न ज्ञायते। मद्रासराजकीयपुस्तकालयस्य भ्वादिप्रकरणस्यान्ते लिखितम्-

"इति हरियोगिनः प्रोल्लनार्चायस्य कृतौ शाब्दिकाभरणे शब्विकरण भूवादवो धातवः समाप्ताः।।"

अनेन ज्ञायते यत् हरियोगिनः पितुः नाम प्रोल्लनाचार्यः आसीत्।

परन्तु तस्यैव हस्तलेखस्यान्ते-

---

१. दैवपुरुषकारे पृ. २१
१. दैवपुरुषकारे पृ. २१
१. दैवपुरुषकारे पृ. ३७
१. दैवपुरुषकारे पृ. ५८
५. माधवीया धातुवृत्तौ पृ. ५०८
६. माधवीया धातुवृत्तौ पृ. १८६
७. सिद्धान्तकौमुदी १०२५ णिसि चुम्बने इति धातोः उपरि
८. शब्दकौस्तुभे पृ. ३०८

"इति हरियोगिनः शैलवाचार्यस्य कृतौ शाब्दिकाभरणे धातुप्रत्ययपञ्जिकायां सौत्रधातवः समाप्ताः।।"

इति पाठः उपलभ्यते। तत्रास्य पितुर्नाम शैलवाचार्य इति लिखितम्।

सरस्वतीभवनपुस्तकालयस्य हस्तलेखे प्रतिप्रकरणम् अन्ते-

"इति हरियोगिनः प्रोल्लनाचार्यस्य कृतौ शाब्दिकाभरणे---------धातवः समाप्ताः।।"

इत्युल्लेखः प्राप्यते।

पितुः नाम्नः उल्लेखः स्वनाम्नः परं अनेकत्र क्रियते अतः हरियोगिनः पितुः नाम प्रोल्लनाचार्यः इति सरस्वतीभवनहस्तलेखस्य आधारेण वक्तुं शक्यते।

मद्रासहस्तलेखे शाब्दिकाभरणस्य नाम्ना सह धातुप्रत्ययपञ्जिकायाः नामान्तरमप्युपलभ्यते। एषा धातुप्रत्ययपञ्जिका शाब्दिकाभरणस्यैवान्तर्गता इति यस्यां केवलं धातुप्रकरणस्यैव व्याख्या विहिता।

शाब्दिकाभरणस्य आरम्भः "अथ शब्दानुशासनम्" इति वार्तिकेन भवति। ग्रन्थस्यायं प्रथमो भागः। अत्र महाभाष्यपस्पशाह्निकस्य सारः प्रतिपादितः भागेऽस्मिन् एते विषयाः विमृष्टाः दृश्यन्ते-

अथ शब्दानुशासनम्, शब्दाः नित्याः अनित्याः वा, शब्दस्याभिव्यञ्जकत्वम्, शब्दस्य परिणामो विवर्तो वा, वाण्याः स्वरूपम्, शब्दब्रह्म, सिद्धे शब्दार्थ-संबन्धे शब्दस्य ज्ञाने धर्मः आहोस्वित् प्रयोगे, व्याकरणाध्ययनस्य प्रयोजनम् इति।

एते विषयाः शाब्दिकाभरणे पाणिनिशिक्षा-महाभाष्य-वाक्यपदीयग्रन्थान् समाश्रित्य उपवर्णिताः सन्ति।

अनन्तरं भूत-वर्तमान-भविष्यकालस्य निरूपणात् परं दशानां लकाराणाम् अर्थाः निरूपिताः सन्ति। तदनु भ्वादि-अदादि-जुहोत्यादि-दिवादि-स्वादि-तुदादि-रुधादि-तनादि-क्र्यादि-चुरादि-कण्ड्वादिप्रकरणानां व्याख्या कृता। ग्रन्थस्यान्ते सौत्राः धातवः पठिताः।

**देवनामकः** कश्चन विद्वान् पाणिनीयधातुपाठविषये 'दैव' इति नाम्ना एकं श्लोकात्मकं ग्रन्थं व्यरचयत्। एतेषां देशकालविषयेऽपि अधिकं प्रामाणिकं नोपलभ्यते। दैवग्रन्थस्य सम्पादकेन गणपतिशास्त्रिणा एतेषां कालः ख्रीस्ताब्दनवमशताब्द्याः आरभ्य द्वादशशताब्द्याः मध्ये स्यादिति स्वीकृतः। देवः मैत्रेयरक्षितादुत्तरवर्ती। अतः एतेषां कालः ११५० तः १२०० मध्ये स्यात्।

**काश्यपेन** कापि धातुवृत्तिः रचिता। माधवीया धातुवृत्तौ काश्यपनामवैयाकरणस्य धातुवृत्तिविषयकमतानि उद्धृतानि। अस्य आचार्यस्य कालविषये इदमित्थं किमपि वक्ते न शक्यते।

**आत्रेयेण** अपि धातुपाठोपरि कश्चिद्वृत्तिग्रन्थः लिखितः आसीत्। सायणाचार्येण माधवीयाधातुवृत्तौ आत्रेयस्य मतानि बहुधा उद्धृतानि। अस्य साक्षादुल्लेखः सायणेन अथर्वभाष्ये (२/२०/५) कृतः। पाणिनीयधातुपाठस्य व्याख्यात्रा मैत्रयेण सह आत्रेयस्योल्लेखेन ज्ञायते यत् आत्रेयेण पाणिनीयधयातुपाठविषये एका वृत्तिः लिखिता। सायणेन आत्रेयः उद्धृतः। सायणस्य कालः १४०० वि.सं. अस्ति। अतः आत्रेयः १४०० वि.सं. पूर्ववर्ती स्यात्।

**हेलाराजेन** अपि पाणिनीयधातुपाठविषये विरचिता काऽपि वृत्तिः आसीत्। वृत्तिकारस्य अस्य उल्लेखः माधवीया धातुवृत्तौ लभ्यते–

अत्र स्वामी संहितायां धातुपाठात् 'वा' शब्दमुत्तरधातुशेषं वष्टि। तन्निपातस्य वा शब्दस्य 'च' शब्दादिवत् पूर्वप्रयोगो नेति हेलिराजीयादौ समर्थनादयुक्तम्।

उद्धरणेऽस्मिन् स्मृतः हेलाराजः वाक्यपदीयटीकाकारो तद्भिन्नो वा भवितुमर्हति। यदि अयं वाक्यपदीयटीकाकारः स्यात्तदा अस्य समयः एकादशशताब्द्याः उत्तरार्द्धभागः भवेत्

**आचार्यसायणः** संस्कृतवाङ्मये अत्यन्तं प्रसिद्धः। सायणेन ज्येष्ठभ्रातुः माधवस्य नाम्ना पाणिनीयधातुपाठे रचिता धातुवृत्तिः। व्याकरणवाङ्मये एषा माधवीया धातुवृत्तिः, धातुवृत्तिः वा इति नाम्नाऽभिधीयते। सायणेन स्वविरचितग्रन्थेष्वात्मपरिचयः प्रदत्तः। अस्य पितुर्नाम मायणः मातुः नाम श्रीमती आसीत्। अस्य ज्येष्ठभ्राता माधवः कनिष्ठश्च भ्राता भोगनाथः आसीत्। सायणः भारद्वाजगोत्रीयः तैत्तिरीयसंहितेयः बौधायनसूत्रीयश्च आसीत्। अस्य जन्म वि.सं. १३७२ तमे वर्षे अभूत् शरीरत्यागश्च वि.सं. १४४४ तमे वर्षेऽभूत्। सायणः एकत्रिंशे आयुषि विजयनगरस्य महाराजहरिहरप्रथमस्य अनुजकम्पणस्य मन्त्रिपदमलङ्करोत्। ततः कम्पणपुत्रसंगमस्य शिक्षकपदं मन्त्रिपदञ्च अलञ्चकार। तदनन्तरं बुक्कप्रथमस्य हरिहरद्वितीयस्य च आमात्यपदं सुशोभितवान्। धातुवृत्तेः आद्यन्तपाठं दृष्ट्वा ज्ञायते यत् सायणेन राज्ञः संगमस्य राज्यकाले धातुवृत्तिः विरचिता। अनेन सम्भाव्यते यत् धातुवृत्तिः वि.सं. १४१२-१४२० मध्ये लिखिता आसीत्।

# पाणिनीयव्याकरणालोके पद्मनाभदत्तविरचितसुपद्मव्याकरणस्य समासप्रकरणस्य समीक्षा

संगीता कुमारी

**यद्यपि बहुनाधीषे तथापि पठ पुत्र व्याकरणम्।**
**स्वजनः श्वजनो मा भूत् सकलं शकलं सकृच्छकृत्॥**

वेदानां रक्षकत्वाद् वेदार्थावबोधने सहायकत्वात् प्रकृतिप्रत्ययोपदेशपुर:सरं पदस्वरूप–प्रतिपादकत्वादर्थनिर्णयकृत्साधनेष्वन्यसाधनत्वेन प्रयुक्तत्वाद् व्याकरणं नाम वेदाङ्गं नितान्तमेव महनीयं श्रेष्ठञ्च अङ्गमङ्गेषु स्मृतम्। व्याकरणस्य "व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा अनेनेति व्याकरणम्" इत्यनेन व्युत्पत्तिलभ्यो अर्थोऽस्ति। तद्वेदस्य मुखत्वेन स्मृतम्–"मुखं व्याकरणं स्मृतम्" व्याकरणशास्त्रं नितरां प्राचीनं शास्त्रमस्ति। न हि व्याकरणज्ञानशून्यः साधून् शब्दान् प्रयोक्तुं समर्थः। वेदस्य रक्षार्थं व्याकरणाध्ययनमत्यावश्यकम्। "रक्षार्थं वेदानामध्येयं व्याकरणम्, लोपागमवर्णविकारज्ञो हि पुरुषः सम्यग् वेदान् परिपालयिष्यति इति पतञ्जलिः। महाभाष्ये व्याकरणस्य मुख्यानि पञ्चप्रयोजनानि उक्तानि– "रक्षोहागमलघ्वसन्देहाः प्रयोजनम्।" शुद्धशब्दज्ञानार्थं साधुशब्दप्रयोगार्थं च व्याकरणज्ञानस्य अनिवार्यता सर्वैरेव संस्तूयते। "संस्कृतं नाम दैवीवागन्वाख्याता महर्षिभिः" इति रूपेण एषा देववाणीति कथ्यते। भारतस्य साहित्यिकसांस्कृतिकैतिहासिकधार्मिकाध्यात्मिकराजनैतिकजीवनस्य समग्ररूपा व्याख्या संस्कृतवाङ्मये समाविष्टा। वाल्मीकिरामायणस्य रचनाकाले व्याकरणशास्त्रस्याध्ययनमध्यापनञ्च सुव्यवस्थिततया प्रचलितम् आसीदित्येतद्धि–

**नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्।**
**बहु व्याहरताऽनेन न किञ्चिदपदभाषितम्॥**

तैत्तिरीयसंहितायामस्य विषयस्य सर्वप्रथमस्तथा प्राचीनतमः उल्लेखो मिलति :–

"वाग् वै पराच्य व्याकृताऽवदत। ते देवा इन्द्रमब्रुवन्–इमां नो वाचं व्याकुर्विति। सोऽब्रवीत्–वरं वृणे, मह्यं चैवेष वायवे च सह गृह्यताम् इति।"

व्याकरणस्य नितान्तमेवोपादेयतां श्रेष्ठतां चावलोक्यैव तन्महिम्नि बुधैरभिहितम्–

**शब्दशास्त्रमनधीत्य यः पुमान् वक्तुमिच्छति वचः सभान्तरे।**
**बन्धुमिच्छति वने मदोत्कटं हस्तिनं कमलनालतन्तुना॥**

**पद्मनाभदत्तस्य जीवनपरिचयः –**

सुपद्मव्याकरणस्य रचयिता पद्मनाभदत्तः पाणिनेरुत्तरवर्तिषु वैयाकरणेषु महत्वपूर्णं स्थानं भजते। तेनास्य व्याकरणस्य रचना चतुर्दशम्यां शताब्द्यां बंगदेशे बंग्लाभाषायां कृता। यद्यपि ई.पू. प्रथमशताब्द्यां पाणिनेरष्टाध्यायी, कात्यायनस्य वार्तिकपाठः, पतञ्जलेः महाभाष्यसदृशानां बहूनां व्याकरणग्रन्थानां सम्पूर्णं प्रभुत्वमासीत्। तथापि ग्रन्थानां विकासक्रमे कातन्त्रव्याकरणम्, जैनेन्द्रव्याकरणं, हेमव्याकरणं, मुग्धबोधव्याकरणमित्यादीनां महत्त्वपूर्णग्रन्थानां रचनाऽभवत्। एतेषां व्याकरणग्रन्थानां उद्देश्यं लाघवमाधारिकृत्य लौकिकसंस्कृतस्य नियमानां सारल्येन ज्ञानं प्रदानम्।

**वंशपरम्परा :–**

पद्मनाभदत्तस्य जन्म मिथिलायाः ब्राह्मणपरिवारे अभवत्। तस्य वंशपरम्परा कालिदासस्य समकालीनवररुचितः प्रारभ्यते। पद्मनाभदत्तेन स्वयमेवोक्तम्–

**संस्कार्य्या प्रतिपाल्या वः पुत्रवत् मम पुस्तकाः।**
**चञ्चलाप्यचला लक्ष्मीर्वाणी यत्र गृहे गृहे।**
**तं विदृक्ष्यं सदा वन्दे विक्रमो यत्र भूपतिः॥**

**कालिदासादयस्तत्र संख्यावन्त सहस्त्रशः।**
**तेषामेको वररुचिः सर्व्वशास्त्रविशारदः॥**

पद्मनाभदत्तस्य पितुः नाम दामोदरदत्तः पितामहश्च श्रीदत्तः आसीत्।

पद्मनाभदत्तेन स्वयमेव स्वविरचिते 'पृषोदरादिवृत्ति' नाम्नि ग्रन्थे स्ववंशपरम्परायाः विषये पञ्चपङ्क्तयः लिखिताः। दौर्भाग्येन अयं ग्रन्थः अनुपलब्धोऽस्ति। पद्मनाभदत्तेन स्वविरचितपरिभाषावृत्याः हस्तलेखेषु (शक सं. १७१४) हरप्रसादशास्त्रिणा तस्य वंशपरम्परायाः[२] विषये एवं कथितम्–

१. वररुचिः (कालिदासस्य समकालिकः)

२. न्यासदत्तः (पाणिनेः अर्थतत्त्वस्य ज्ञाता)

३. जयादित्यः (मीमांसाशास्त्रे पारङ्गतः)

४. श्रीपतिः (सांख्यशास्त्रस्य ज्ञाता)

५. गणेश्वरः (काव्यशास्त्रस्य ज्ञाता)

६. भानुभट्टः (रसमञ्जर्याः रचयिता)

१. Introduction, Supadmvyākaranam-P.VI.VII.

२. Descriptive catalogue of Sanskrit Manuscripts. Volume VI.

७. श्रीदत्तः (स्मृतिशास्त्रस्य ज्ञाता)

८. भवदत्तः (वेदान्तज्ञः)

९. दामोदरः (काव्यलङ्कारस्य रचयिता)

१०. पद्मनाभदत्तः (सुपद्मव्याकरणस्य रचयिता)

**उक्तञ्च–**

**हलायुधस्तत्सुतश्च मीमांसाशास्त्रपरागः।**
**श्रीदत्तस्तत्सुतश्चैव स्मृतिशास्त्रार्थतत्त्ववित्।**
**तत्सुतो भवदत्तश्च वेदान्ती कविरुत्तमः॥**

**पद्मनाभदत्तस्य कृतयः –**

पद्मनाभदत्तेन सुपद्मनामकं एकं संक्षिप्तं व्याकरणं विरचितम्। अस्य उणादिवृत्तौ 'सुपद्मनाभ' इत्यभिधानं प्राप्यते।[३] पद्मनाभदत्तेन स्वीयायां परिभाषावृत्तौ अधोलिखितानां ग्रन्थानामुल्लेखः कृतः।

१. सुपद्मपञ्जिका
२. प्रयोगदीपिका
३. उणादिवृत्तिः
४. धातुकौमुदी
५. यङ्लुग्वृत्तिः
६. गोपालचरितम्
७. आनन्दलहरी टीका
८. छन्दोरत्नम्
९. आचारचन्द्रिका
१०. भूरिप्रयोगकोशः
११. परिभाषावृत्तिः[४]

**उत्तमो व्याकरणदर्शः सुपद्मस्तस्य टिप्पणी।**[५]
**ततो बालबोधाय प्रयोगाणाञ्च दीपिका॥**

**उणादिवृत्ती रचिता तथा च धातुकौमुदी।**
**तववी यङ्लुको वृत्तिः परिभाषा ततः परम्॥**

**गोपालचरितं नाम साहित्ये ग्रन्थरत्नकम्।**
**आनन्दलहरीटीका स्मृतावाचारचन्द्रिका॥**

---

३. सुपद्मनाभेन सुपद्मसम्मतं, विधिः समग्रः सुगमं समस्यते।
द्र. – संस्कृतव्याकरणशास्त्रेतिहासः, भाग-२, पृ. २२।

४. द्र. – सं.व्या.शा.इति. भाग-२, पृ. २७।

५. द्र. – Introduction, Supadmvyākaranam-P.VII.VIII.

**कोशे भूरिप्रयोगाख्यो रचितस्तातयत्नतः।**
**धीराः श्रीपद्मनाभेन गृह्यते ह्यञ्जलिः॥**

पद्मनाभदत्तेन स्वकीयेन सुपद्मव्याकरणेन सम्बद्धः 'परिभाषापाठः' विरचितः। पद्मनाभदत्तेन विरचितायां परिभाषावृत्तौ 'रामनाथ-सिद्धान्तेन विरचिता टीका अस्ति। एतस्याः उपरि धर्मसूरिणा विरचितस्य 'परिभाषार्थप्रकाशिका' ग्रन्थस्य हस्तलेखः 'अडियार' इत्यस्य ग्रन्थसङ्ग्रहे विद्यते। 'परिभाषार्थप्रकाशिका' वृत्तेः अनन्तरमयं पाठो लभ्यते :-

'इति पन्दिलान्वयवायदुग्धपायोनिधिशरत्प्रकाशनिधिशाब्दिकचक्रवर्तिपद्मनाभतनयेन धर्मसूरिणा विरचिता परिभाषार्थप्रकाशिका समाप्ता।

अनेन निर्देशेन धर्मसरिणः पितुः नाम पद्मनाभोऽस्ति। एषा वृत्तिः सुपद्मव्याकरणेन सम्बद्धे परिभाषापाठे विद्यते पाणिनीयपाठे वा अत्र संदेहोऽस्ति।

**सुपद्मव्याकरणस्य टीकाकाराः –**

१. पद्मनाभदत्तः – पद्मनाभदत्तेन स्वव्याकरणे स्वयं पञ्जिका नाम्नी टीका लिखिता।

२. विष्णुमिश्रः

३. रामचन्द्रः

४. श्रीधरः चक्रवर्ती

५. काशीश्वरः इत्यादयः

**सुपद्मव्याकरणम् –** अस्मिन्ग्रन्थे पद्मनाभदत्तस्य उद्देश्यमासीत् संस्कृतव्याकरणस्य नियमानां लाघवेन सरलरीत्या च प्रस्तुतीकरणम्। सुपद्मव्याकरणस्य आधारः पाणिनीय अष्टाध्यायी अस्ति। सूत्रेषु लाघवार्थं पद्मनाभेन पाणिनीवत् प्रत्याहारविधिः प्रयुक्ता। सुपद्मव्याकरणे पञ्च अध्यायाः प्रत्येकस्मिन् अध्याये चत्वारः पादाः सन्ति। अस्मिन् व्याकरणे २८०० सूत्राणि सन्ति। मया सुपद्मव्याकरणगत-चतुर्थोऽध्यायस्य तृतीयपादस्य समासविधायकसूत्राणां विवेचनं क्रियते।

**समासस्यसामान्यपरिचयः**

किन्नाम समासत्वमिति जिज्ञासायामुच्यते-समासत्वञ्च शक्तिसम्बन्धेन समासपदवत्तत्वम्, एकार्थीभावयुक्तसमुदायविशेषो वा। "राजपुरुषादिपदं राजसम्बन्धवत्पुरुषादौ शक्तम्" इतिरूपः शक्तिग्रहः। कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्चवृत्तयः इति वचनेन समासस्य वृत्तावन्तर्भावात् वृत्तिस्वरूपमाह- परार्थाऽभिधानं वृत्तिः। सा वृत्तिर्द्विधा-जहत्स्वार्थाऽजहत्स्वार्थाभेदेन। समस्यमानपदार्थानां निरपेक्षत्वे सति समुदायार्थज्ञापिकात्वं जहत्स्वार्थात्वम्। यथा रथन्तरं सामभेदः शुश्रूषा स्वेत्यादयः। समस्यमानपदार्थ-संस्पृष्टसमुदायार्थबोधिकात्वम् अजहत्स्वार्थात्वम्। यथा राजपुरुषेत्यादिः। पदविधिः समर्थाश्रितो भवति।

समासस्य पदकार्यत्वात् सामर्थ्यस्यापेक्षा भवत्येव। तच्च सामर्थ्यं द्विप्रकारकम् व्यपेक्षैकार्थीभावरूपेण। विशिष्टा अपेक्षा व्यपेक्षेति व्युत्पत्तियोगात् स्वार्थपर्यवसायिनां पदानामाकांक्षादिवशाद् यः परस्परान्वयः तद् व्यपेक्षाभिधं सामर्थ्यमित्यर्थो लभ्यते। व्यपेक्षापक्षे प्रत्येकपदेषु पृथग् पृथगर्थबोधिका शक्तिः विद्यते। ते चार्थाः निकटपदार्थैः एकीभूय विशिष्टार्थं बोधयन्ति। एकार्थीभावसामर्थ्यन्तु प्रक्रियादशायां प्रत्येकमर्थवत्वेन पृथक् गृहीतानां पदानां समुदायशक्त्या विशिष्टएकार्थप्रतिपादकम्। पक्षेऽस्मिन् घटकपदेषु स्वतन्त्रा शक्तिः नास्ति कश्चिदर्थोऽपि। समुदायविशिष्टशक्त्या सामर्थ्यमिदं विशेष्यविशेषणभावावगाहि भूत्वा उपस्थितं भवति। यथा राजपुरुषादिसमस्तपदे "राजाभिन्नः पुरुषः" इत्यर्थमुपस्थापयति। समासे निश्चयेन पदार्थशक्त्या पृथगेका विशिष्टा शक्तिः। सा च पङ्कजशब्दवद्भिन्ना शक्तिः भवत्येव। पाणिनिव्याकरणवत् सुपदम्व्याकरणे अपि समासश्चतुर्धा प्रायः – अव्ययीभावतत्पुरुषद्वन्द्वबहुव्रीहिभेदात्।

**१. अव्ययीभावसमासः –**

'अनव्ययम् अययं भवति' इत्यस्मिन् विग्रहे 'भवतेर्ण उपसंख्यानम्' सूत्रेण 'ण' प्रत्ययः ईत्वादेशश्च भूत्वा अव्ययीभावशब्दः निष्पद्यते। अस्मिन् 'सुप्', 'सुपा' उभयोरनुवृत्तिः भवति। सप्तम्याद्यर्थेषु अव्ययं सुबन्तेन सह समस्यते। सप्तम्यर्थे स्त्रीष्वधिकृत्य या कथा प्रवर्तते सा अधिस्त्रि कथा। समास-ग्रस्तत्वे सति नानाविभक्तिष्वेकरूपतावत् पदत्वमव्ययीभावत्वम्। किञ्च उत्तरार्थान्वित-स्वार्थाव्ययपूर्वस्तु यो भवेत्। समासः सोऽव्ययीभावः स्त्रीपुंलिङ्गविवर्जितः। अमादेशं बिना श्रूयमाण-षष्ठी न बोधिका। स्वार्थे यदर्थस्य यद्वा सोऽव्ययीभाव इष्यते। सुपद्मव्याकरणे पाणिनेः सूत्रेषु शाब्दिकदृष्ट्या किञ्चिद् परिवर्तनं दृश्यते। यथा– पाणिनीय व्याकरणे "अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु" सूत्रस्य प्रयोगः दृश्यते तत्स्थानेऽत्र "अव्ययं सप्तम्यनुक्रम-समीप-पश्चाद्-यथा-अत्याभाव-शब्दप्रकाश-यौगपद्य-सम्पद्-असम्प्रति-साकल्यान्तार्थेषु" सूत्रं प्रयुक्तम्।

अधिस्त्रि– 'अधि सु स्त्री सुप्' अलौकिक विग्रहे 'अव्ययं सप्तम्यनुक्रम– सूत्रेण समासः 'कृत्तद्धितसमासाश्च'[६] सूत्रेण प्रातिपदिकसंज्ञा, 'सुपो धातुप्रातिपदिकयोः'[७] सूत्रेण विभक्तेर्लोपः, 'स्त्री अधि' इति स्थिते 'उपसर्जनं पूर्वम्' सूत्रेण अधिशब्दस्य पूर्वनिपातः,–'अधिस्त्री'। 'अव्ययीभावश्च' सूत्रेण नपुंसकलिङ्गे 'ह्रस्वो नपुंसके प्रातिपदिकस्य' सूत्रेण ह्रस्वे प्रातिपदिकत्वात् 'सु' प्रत्ययः 'अव्ययादाप्सुपः' सूत्रेण सुलोपे सति 'अधिस्त्रि' रूपम् सिद्धम् भवति। पाणिनीयव्याकरणसुपद्मव्याकरणयोः सूत्राणां मध्ये विद्यमानं शाब्दिकान्तरं यथा–

| | | |
|---|---|---|
| १. यथाऽसादृश्ये | – | यथा न तुल्ये |
| २. यावदवधारणे | – | यावदियत्तायाम् |

६. पा.सू. १/२/४६

७. पा.सू. २/४/७१

३. सुप् प्रतिना मात्रार्थे – प्रतिना मात्रार्थे

४. अक्षशलाकासङ्ख्या:परिणा – परिणा–अक्षशलाका संख्या द्यूतेऽदन्यथावृतौ।

**२. तत्पुरुषसमासः –** 'तत्पुरुष:' इतीदमधिकारसूत्रम्। तत्पुरुषो नाम समासो वाच्य:, आकर्मधारयात्। उत्तरपदार्थप्रधानस्तत्पुरुष:। असमानविभक्तिमत्प्रतिपदप्रकृतिकत्वे सति अभेदबोधकपदत्वं तत्पुरुषत्वम्। अन्यच्च यदीयेन सुबर्थेन सत्यत्बोधनक्षय:, स: समासस्तस्य तत्र च तत्पुरुष उच्यते। द्वितीयादिसुबर्थस्य भेदादेष च षड्विध:। क्रियान्वयी द्वितीयादे: अर्थ: प्रायोऽत्र योजित:। यथा– पूर्वकाय:, अपरकाय:।

**३. द्वन्द्वसमासः –** 'चार्थे द्वन्द्व:' अनेकमित्येव, चार्था: बहव:, तत्र समाहारेतरेतरयोगयो: सामर्थ्यादनेकं सुबन्तं समस्यते। समासश्च द्वन्द्वसंज्ञो भवति। संहतिप्रधानो हि समाहार:। तत्र वाक् च त्वक् च वाकत्वचम्। संहन्यमानप्रधानो हि इतरेतरयोग:, कृष्णार्जुनौ। पदजन्यप्रतिपत्तिविषयभेदबोधकत्वे सति समान–विभक्तिकपदत्वं द्वन्द्वत्वम्। द्वौ भेदावस्य शास्त्रोक्तौ समाहार इतरेतरौ।

**४. बहुव्रीहिसमासः –** 'अनेकमन्यपदार्थे बहुव्रीहि:' अनेकं सुबन्तं अन्यपदार्थे समस्यते। समासश्च बहुव्रीहिसंज्ञो भवति। द्वितीयाद्यन्य–पदार्थेऽभिधानम्। आरूढ़ो वानरो यं वृक्षं स आरूढ़वानरो वृक्ष:। नञ् तत्पुरुष: भिन्नत्वे सति उत्तरपदलाक्षणिकत्वं बहुव्रीहित्वम्। बहुव्रीहि: स्वगर्भार्थसम्बन्धित्वेन बोधक:।

द्विगुकर्मधारयसमासौ तत्पुरुषसमासस्यैव भेदौ स्त:।

**द्विगुसमासः –** 'द्विगु: संख्या तद्धितार्थसमाहारयो:' तद्धितार्थ–विषये समाहारि चाभिधेये एकार्थेन सुपा सह संख्या समस्यते। समासश्च द्विगुसंज्ञो भवति। पञ्चसु कपालेषु संस्कृत: पञ्चकपाल:सूप:। समानविभक्तिमत्पदप्रकृतिकत्वे सत्यभेदबोधकसंख्यापूर्वपदत्वं द्विगुत्वम्। संख्याशब्दयुक्तं नाम–

द्विगुत्वम् : – संख्या शब्दयुक्तं नाम तदलक्ष्यार्थ बोधकम्। अभेदेनैव यत्स्वार्थे स: द्विगुस्त्रिविधो मत:। तद्धितार्थान्वितस्वार्थस्तद्धितार्थ–द्विगुर्मत:।

**कर्मधारयसमासः –** विशेषणमेकार्थेन कर्म्मधारयो बहुलम्' विशेषणवाचि सुबन्तं विशेषणैकाधिकरणेन सह समस्यते। समासश्च कर्म्मधारयसंज्ञो भवति। नीलञ्च तदुत्पलञ्चेति नीलोत्पलम्। विशेषणेन च शीतोष्णम्। शाकप्रधानादे: पार्थिवादौ मध्यमपदलोपश्च। शाकप्रधानश्चासौ पार्थिवश्चेति शाकपार्थिव:

उपर्युक्तपर्यालोचनया एतदवगम्यते यत् समासमाधारीकृत्य विवेचनीया: विषया: नाल्पीयांस: अपितु विशाला: सन्ति।

# महाकाव्यलक्षणपरिप्रेक्ष्ये अभिराजराजेन्द्रमिश्रसम्मत-महाकाव्यस्वस्वरूपविमर्शः

**श्रीसत्येन्द्रपाण्डेयः**

समाजः साहित्यमुकुरे समग्रतया प्रतिबिम्बितो भवति। यस्य देशकालादेः यादृशः समाजो भवति साहित्यमपि तदनुरूपमेव जायते। अतएव रामायण-महाभारतकालीनस्य समाजस्य स्वरूपपरिज्ञानार्थं तात्कालीनं सहित्यानुशीलनं क्रियते। एवं परिवर्त्तमानेन समाजेन साकं साहित्यपरिवर्तनमपि स्वाभाविकमेव। अथ च **'लक्ष्यानुसारि लक्षणं भवती'**ति सिद्धान्तात् प्रथमोपलब्धं लक्ष्यं दृष्ट्वैव लक्षणस्य निर्धारणं मर्मज्ञाः कुर्वन्ति। लक्षणकारः स्वसमक्षम् उपस्थितं काव्यस्यानुशीलनं कृत्वा तस्यादर्शरूपं शस्त्रीयशैल्यां प्रस्तौति। काव्यज्ञः यत्काव्यमवलोक्य लक्षणं निर्धारयति तत्तु मौलिकाद्भावनया परिपूर्णं भवति परं कालान्तरे लक्षणमिदमाश्रित्य यत्काव्यं विरच्यते तद्वस्तुतः रूढिग्रस्तं संजायते। अतो नवनवोन्मेषशालि-प्रतिभासम्पन्नः कविः प्रवृत्तिमिमं विज्ञाय लक्षणस्य अन्धानुकरणं नैव कुरुते। सः स्वाभाविकशैल्यां काव्यं प्रवर्तते। पारम्परिकः समालोचकः प्रथमतया तु च्युतपरम्परां मत्वा रचनामिमाम् उपेक्षन्ते देशकालानुरूपं यदा सहृदयाह्दयालादकारिणी संजायते तदा तदेव परिवर्तनम् अनुकरणीं भवति।

अद्यतनयुगे संस्कृतसाहित्यलेखने नवप्रवृतीनां नूतनवस्तूनां नवीनप्रतिमानानाञ्च बाहुल्येन प्रयोगः दरीदृश्यते। अतः पुरा भामह-दण्डि-रुद्रटप्रभृतयः काव्यचिन्तकाः तात्कालीनं साहित्यमभिलक्ष्य तस्य यदादर्शरूपं प्रतिमानञ्च लक्षणमाध्यमेन उपस्थापितवन्तः, अद्यतनीयं परिवर्तितं साहित्यं पूर्णतया न तदनुरूपं वर्तते। इदानीन्तनं साहित्यसुवर्णं न तल्लक्षणनिकषे परीक्षितुं शक्यते। अतः आधुनिकाः कवयः काव्यविदश्च काव्यगततत्त्वानां पुनर्विचारं व्यवस्थापनञ्च कर्तुमपेक्षितमित्यमन्यन्त। तस्यैव परिणामस्वरूपं विंशैकविंशशताब्द्योः नैकानि काव्यशास्त्राणि विरचितानि।

संस्कृतकाव्यरचनासु महाकाव्यविधायाः महत्त्वं किमपि अधिकं स्वीक्रियते। महाकाव्यं विश्वस्य प्रत्येकस्य प्राचीनदेशस्य सभ्यता-संस्कृत्योः अभिव्यक्तेः प्रमुखं साधनमस्ति। भारतस्य यथा रामायण-महाभारतञ्च महाकाव्ये स्तः तथैव यूनानदेशस्य होमरकवेः 'इलियड' 'ओडिसी' महाकाव्यं तत्रत्यानां संस्कृतीनां परिचायकं वर्तते। वृहदाकारत्वादिह जीवनस्य समग्रं रूपं चित्रितं भवति। मानवजीवनस्य आन्तरं बाह्यञ्चेत्युभयमपि पक्षमत्र साधुतया वर्ण्यते। व्यक्तेः समाजस्य राष्ट्रस्य च

गुरुतमसमस्यानां गभीरम् उदात्तं विचारोत्तेजकं सरसञ्च वर्णनं भवति। छन्दसां योजनया लयात्मकतायाः संचारो भवति। विविधरसयोजनया पदे-पदे सहृदयहृदयाह्लादः संजायते। नानाविधपरिस्थतीनां चित्रणेन विभिन्नपरिस्थितिषु आदर्शव्यवहारस्य निर्देशः प्राप्यते। लौकिकालौकिकयोः मानवदानवयोः सदसतोः भावस्य उत्कर्षापकर्षात्मकपरिणामस्य निरूपणं भवति। येन 'रामादिवद्वर्तितव्यं न रावणादिवदि'ति कर्त्तव्याकर्त्तव्यस्यावबोधः संजायते।

एवंविधानां माहाकाव्यानाम् आदर्शरूपं नीत्वा काव्यशास्त्रिणः महाकाव्यस्य नैकानि लक्षणानि निर्धारितवन्तः। महाकाव्यस्य विविधलक्षणैः सिद्ध्यति यत् काव्यस्य अन्यविधापेक्षया महाकाव्यस्य परिभाषा किमप्यधिकं परिवर्त्तनशीला वर्तते।

संस्कृतकाव्यशास्त्रस्य आद्याचार्यः भामहः सर्वप्रथमं महाकाव्यस्य लक्षणं निर्दिष्टवान्। तस्य वक्तव्यं वर्तते मया सत्कवीनां महाकाव्यमनुशील्य स्वमेधसा लक्षमेतत् निर्धारितम्। तन्मते महाकाव्यं तद्भवति यत् सर्गबद्धम्, महाचरितसम्बद्धम्, बृहदाकारम्, ग्राम्यशब्दविरहितम्, अर्थसौष्ठवयुतम्, अलङ्ङ्कारसमन्वितम्, सत्पुरुषाणां वृत्ताश्रितम्, राज्यसम्बन्धिमन्त्रणा-दूतप्रयोग-सैन्याभियान-युद्ध-नायकाभ्युदययुतम्, नाटकीयपञ्चसन्धिसमन्वितम्, अनतिव्याख्येयम्, ऋद्धिपूर्णम्, चतुर्वर्गोपदेशकत्वेऽपि प्रामुख्येन अर्थोपदेशकम्, लोकव्यवहारानुकूलम्, अथ च पृथक्तया सर्वरसैः समन्वितं योजनं यद् भवति तदेव महाकाव्यं कथ्यते।[१]

एवं भामहः महाकाव्यस्य लक्षणे मुख्यतया षड्विषयानधिकृत्य स्वकीयं मन्तव्यं प्रास्तौत्। ते च सन्ति- १. महाकव्यस्य बन्धम् आकारः २. नायकः ३. अभिव्यञ्जना ४. वर्ण्यविषयम् ५. रचनाविधानम् ६. आस्वादश्चेति।

आचार्यो दण्डी भामहस्य प्रकृतलक्षणे इतोऽपि किमपि अतिरिक्तवैशिष्ट्यं तत्त्वञ्चायोजयत्- सः महाकाव्यस्य आदौ मङ्गलाचरणस्य निर्देशं करोति, कथावस्तु ऐतिहासिकं वा कल्पितं स्यात्। चतुर्वर्गसिद्धिः तस्य फलं भव्यम्, नायकः तस्य चतुरोदात्तः भवेत्, नगरार्णवादिवर्णनं स्यात्। विविधोत्सवानां चित्रणं स्यात्। विप्रलम्भश्रृंगारस्य, विवाहस्य, कुमारोदयानां उल्लेखः स्यात्। रसभावस्य नैरन्तर्यं स्यात्।

---

१. सर्गबन्धो महाकाव्यं महताञ्च महञ्च यत्। अग्राम्यशब्द्यमर्थ्यञ्च सालङ्कारं सदाश्रयम्।।
मन्त्रदूतप्रयाणाजिनायकाभ्युदयैश्च यत्। पञ्चभिः सन्धिभिर्युक्तं नातिव्याख्येयमृद्धिमत्।।
चतुर्वर्गाभिधानेऽपि भूयसार्थोपदेशकृत्। युक्तं लोकस्वभावेन रसैश्च सकलैः पृथक्।।
नायकं प्रागुपन्यस्य वंशवीर्यश्रुतादिभिः। न तस्यैव वधं ब्रूयादन्योत्कर्षाभिधित्सया।।
यदि काव्यशरीरस्य न स व्यापितयेष्यते। न चाभ्युदयभाक्तस्य मुधादौ ग्रहणं स्तवे।।
—काव्यालङ्कार, भामह-१/१९-२३

सर्गः तस्य अनतिविस्तीर्णः भवेत्। विभिन्नलघुवृत्तानामपि समावेशः स्यात्। अन्यत्सर्वमपि लक्षणमेतस्य भामहसम्मतमेव परिलक्ष्यते।[१]

दण्डिनः अनन्तरं महाकाव्यस्वरूपमधिकृत्य रुद्रटाचार्यः विस्तृतं मौलिकञ्च विवेचनमकरोत्। असौ प्रबन्धं द्विधा विभजते। तत्रापि काव्यस्य कथादृष्ट्या आकारदृष्ट्या च द्वौ-द्वौ भेदौ स्वीकृतवान्। कथादृष्ट्या उत्पाद्यानुत्पाद्यश्चेति द्वौ भेदौ स्तः, तत्र उत्पाद्यवस्तुनः काव्ये सर्वमपि कथानकपात्रादिकं कविकल्पितं भवति। ऐतिहासिकं पौराणिक वा कथावस्तु अनुत्पाद्यं भवति। तेष्वपि महाकाव्यं तद्भवति यस्मिन् आकारगता महत्ता स्यात्, चतुर्वर्गस्याभिधानं स्यात्। सर्वे रसाः काव्यास्थानानि च स्युः। उत्पाद्यमहाकाव्ये प्रथमं नगरीवर्णनं स्यात् ततो नायकस्य वंशादेः प्रशंसा वर्णनीया। नायकः धर्मार्थकामेति त्रिष्वपि पुरुषार्थेषु रतः स्यात्। तिसृभ्योऽपि प्रभुशक्तिभ्यः सम्पन्नः सर्वगुणसम्पन्नः सर्वाः अपि राजप्रकृतयः तस्मिन् अनुरक्ताः स्यु। स्वयं च विजिगीषु स्यात्। राज्यं राज्यकार्यं वा सम्पृक्तम् ऋतुवर्णनं स्यात्। स्वमित्राय धर्माद्यनुष्ठानकर्मणि प्रवृत्तस्य नायकस्य प्रतिपक्षिणामपि वर्णनं भवेत्। स्वसेवकैः दूतैः शत्रुकार्यं श्रावयित्वा सभायां तस्य क्रोधोद्दीपनस्यापि वर्णनं करणीयम्। नायके एतादृशं व्यवहारं प्रदर्शनीयं यत्सः सचिवैः मन्त्रणां कृत्वा शत्रून् दण्डयितुं निश्चयं करोति। तदनन्तरं सः राजा एव युद्धाय प्रेरणीयम्, अथवा दूतद्वारा प्रतिपक्षिराजसभायां युद्धस्य निमन्त्रणं प्रेषयेत्। ततो नागरिकाणां संक्षोभम्, मार्गे प्राकृतिकदृश्याणां वर्णनम्, सूर्यास्त-सूर्योदय-रात्रिकाल-संगीत-पान-शृंगारादीनां प्रसङ्गानुकूलं वर्णनं कुर्वाणः अधिकाधिकं कथावृद्धिः करणीया। नायक इव प्रतिनायकेऽपि असहिष्णुता दुर्गरोधश्च दर्शनीयः। प्रातःकाले युद्धः निश्चितः अतो वधाशङ्कमानानां सुभटानां प्रेरणं प्रदद्यात्। प्रकृष्टं व्यूहनिर्माणं कारयितव्यम्। अन्ते च विस्मयाबद्धे युद्धे स्ववीर्यं प्रदर्शयतः नायकस्य विजयो दर्शनीयः। महाकाव्यकथा सर्गे भिक्ता स्यात् संधीनाम् उचितः प्रयोगः करणीयः येन कथायां परस्परं सम्बद्धता भवेत्।[१]

---

१. सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम्। आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्।।
इतिहासकथोद्भूतमितरद्वा सदाश्रयम्। चतुर्वर्गफलोपेतं चतुरोदात्तनायकम्।।
नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः। उद्यानसलिलक्रीडामधुपानरतोत्सवैः।।
विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः। मन्त्रदूतप्रयाणाऽजिनायकाभ्युदयैरपि।।
अलङ्कृतमसंक्षिप्तं रसभावनिरन्तरम्। सर्गैरनतिविस्तीर्णैः श्रव्यवृत्तैः सुसन्धिभिः।।
सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जकम्। काव्यं कल्पान्तरस्थायि जायेत सदलङ्कृति।।
न्यूनमप्यत्र यैः कश्चिदङ्गैः काव्यं न दुष्यति। यद्युपात्तेषु सम्पत्तिराराधयति तद्विदः।।
गुणतः प्रागुपन्यस्य नायकं तेन विद्विषाम्। निराकरणमित्येष मार्गः प्रकृतिसुन्दरः।।
वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि। तज्जयान्नायकोत्कर्षवर्णनं च धिनोति नः।।
—काव्यादर्शः, दण्डी-१.१४-२२

एवं रुद्रटाचार्यः भामहलक्षणं स्वीकृत्य दण्डिसम्मतम् अतिरिक्तं वैशिष्ट्यं नैव उल्लिखितवान्। कथावस्तुनः कल्पिभेदस्य उल्लेखम् उभावपि कुर्वाते। अनेन प्रतिभाति यत् कल्पितकथावतः महाकाव्यस्य उदाहरणं तदानीमुपलब्धमासीत्। भामहरुद्रटचार्यौ सर्वेषां रसानां स्थितिं स्वीकुरुतः। दण्डी प्रकारान्तरेण रसभावयोः नैरन्तर्यं निदिशति। रुद्रटः संघर्षभावनायाः उदग्ररूपं महाकाव्ये निर्दिष्टवान्। अन्यानि तथ्यानि त्रयाणामपि आचार्याणां समानानि एव सन्ति।

आनन्दवर्धनाचार्यः रसव्यञ्जनादृष्ट्या महाकाव्यस्य वैशिष्ट्यं ज्ञापयति। तस्य मन्तव्यं वर्तते यत् महाकाव्ये सन्धिसन्ध्यङ्गानां योजना न केवलं शास्त्रीयदृष्ट्या प्रत्युत् रसाभिव्यंजनायैव करणीया।[२] असौ मनुते यत् कथा उत्पाद्या प्रसिद्धा वा स्यात् परं सा विभावादियोजनया श्लाघनीया स्यात्। पारम्परिककथायां कश्चिदंशो रसविरोधी स्याच्चेत् रसोचितं कथोन्नयनं न कथमप्यनुचितं वर्तते।

अथ च महाकाव्यगत-रसयोजनासन्दर्भे ध्वन्यालोककारः एकं प्रमुखं तथ्यं स्थापितवान्। भामह-दण्डि-रुद्रटाचार्याः यत्र महाकाव्ये रसानामङ्गाङ्गिभावविषये स्पष्टतया किमपि न उल्लिखन्ति, तत्रैव आनन्दवर्धनः कथयति यत् सर्वेषां रसानां प्रसङ्गानुरूपं योजनेऽपि तेषु कश्चिदेकस्य रसस्य अङ्गितया वर्णनेन महाकाव्ये उत्कृष्टतामागच्छति-

**प्रसिद्धेऽपि प्रबन्धानां नानारसनिबन्धने।**
**एको रसोऽङ्गीकर्तव्यस्तेषामुत्कर्षमिच्छता।।**[१]

---

१. तत्र महान्तो येषु च विततेष्वभिधीयते चतुर्वर्गः। सर्वे रसाः क्रियन्ते काव्यस्थानानि सर्वाणि।।
तत्रोत्पाद्ये पूर्वं सन्नगरीवर्णनं महाकाव्ये। कुर्वीत तदनु तस्यां नायकवंशप्रशंसां च।।
तत्र त्रिवर्ग सक्तं समिद्धशक्तित्रयं च सर्वगुणम्। रक्तसमस्तप्रकृतिं विजिगीषुं नायकं न्यस्येत्।।
विधवत्परिपालयतः सकलं राज्यं च राजवृत्तं च। तस्य कदाचिदुपेतं शरदादिं वर्णयेत्समयम्।।
स्वार्थं मित्रार्थं वा धर्मादिं साधयिष्यतस्तस्य। कुल्यादिष्वन्यतमं प्रतिपक्षं वर्णयेद् गुणिनम्।।
स्वचरात्तद्दूताद्वा कुतोऽपि वा श्रृण्वतोऽरिकार्याणि। कुर्वीत सदसिराज्ञां क्षोभं क्रोधेद्धचित्तगिराम्।
संमन्त्र्य समं सचिवैर्निश्चित्य च दण्डसाध्यतां शत्रोः। तं दापयेत्प्रयाणं दूतं वा प्रेषयेन्मुखरम्।।
अथ नायकप्रयाणे नागरिकक्षोभजनपदाद्रिनदीः। अटवीकाननसरसीमरुजलधिद्वीपभुवनानि।।
स्कन्धावारनिवेशं क्रीडां यूनां यथायथं तेषु। रव्यस्तमयं संध्यां संतमसमथेदयं शशिनः।।
रजनीं च तत्र यूनां समाजसंगीतपानशृङ्गारान्। इति वर्णयेत्प्रसङ्गात्कथां च भूयो निबध्नीयात्।।
प्रतिनायकमपि तद्वत्तदभिमुखममृष्यमाणमायान्तम्। अभिदध्यात्कार्यवशान्नगरीरोधस्थितंवापि।।
योद्धव्यं प्रातरिति प्रबन्धमधुपीति निशि कलत्रेभ्यः। स्ववधं विशिङ्कमानान्संदेशान्दापयेत्सुभटान्
संनह्य कृतव्यूहं सविस्मयं युध्यमानयोरुभयोः। कृच्छ्रेण साधु कुर्यादभ्युदयं नायकस्यान्ते।।
सर्गाभिधानि चास्मिन्नवान्तरप्रकरणानि कुर्वीत। संधीनपि संश्लिष्टांस्तेषामन्योन्यसंबन्धात्।। काव्यालङ्कारः, रुद्रटः- १-६५, ७-१९

२. सन्धिसन्ध्यंगघटनं रसाभिव्यक्त्यपेक्षया।
न तु केवलया शास्त्रस्थितिसम्पादनेच्छया।। ध्वन्यालोक- ३-१२

काव्यानुशासनकारः जैनाचार्यः हेमचन्द्रः संस्कृत-प्राकृतापभ्रंशभाषानिबद्धानां महाकाव्यानां लक्षणं निर्दिशन् कथयति यत्- महाकाव्ये भिन्नान्त्यवृत्तम् सर्ग-आश्वासादिबद्धता, संधियोजना, शब्दार्थवैचित्र्यश्चेति वैशिष्ट्यमवाप्यते-**"पद्यं प्रायः संस्कृतप्राकृतापभ्रंशग्राम्यभाषानिबद्धभिन्नानत्यवृत्तसर्गा श्वाससंध्यव-स्कन्धकबन्धं सत्सन्धि शब्दार्थं वैचित्र्योपेतं महाकाव्यम्।"**[2]

अनेन शब्दार्थवैचित्र्यान्तर्गते प्राचीनानां भामह-दण्डि-रुद्रटप्रतिपादितानां सर्वेषां वैशिष्ट्यं सगृह्णाति।[3]

आचार्यविश्वनाथः महाकाव्यमधिकृत्य विस्तरेण तस्य स्वरूपं विसापयति। महाकाव्यं सर्गबन्धमपि कथ्यते। अस्मिन् नायकः देवता अथवा धीरोदात्तगुणसम्पन्नः सद्वंशीयः कश्चन एकः अङ्गीत्वेन अन्ये च रसाः अङ्गतया वर्णनीयाः। नाट्यसंधीनां समग्रतया प्रयोगो भवति। कथावस्तु सज्जनाश्रितं स्यात् ऐतिह्याधारितं वा कल्पितं स्यात्। धर्मादिचतुवर्गेषु कश्चिदेकं फलं प्रयोजनं वा भवेत्।

महाकाव्यस्यारम्भे मंगलाचरणं तथा मध्ये खलनिन्दा सज्जनानां प्रशंसा करणीया। सर्गस्थानि पद्यानि समानछन्दसि एव निबद्धानि स्युः, सर्गान्ते छन्दः परिवर्तनमपेक्षितं भवति। सर्गाणां संख्या न तु अधिका नवा न्यूना भवेत्। अन्यच्च संभोग-विप्रयोग-मुनि-स्वर्ग-पुर-यज्ञ-युद्धप्रयाण मन्त्र-पुत्रोदयादीनां यथायोग्यं सांगोपांगं वर्णनं करणीयम्। महाकाव्याभिधानं कविं, कथां, नायकं तदितरं वा अधिकृत्य कर्तुं शक्यते। सर्गस्य तु तत्तत्सर्गोपादेयकथामवलम्ब्य नामकरणं कर्तुं शक्यते।[४] विद्यानाथो ब्रवीति यत् यत्र नगर-समुद्र-पर्वत-ऋतु-चन्द्र-सूर्य-विवाह-कुमारजन्म-विवाहयात्रा-युद्ध-नायकाभ्युदयाश्च वर्ण्यन्ते तदेव महाकाव्यं भवति-

---

१. तत्रैव, ३/२१, ४/५

२. काव्यानुशासन, पृ. ४४९

३. शब्दवैचित्र्यं यथा-असंक्षिप्तग्रन्थत्वं, अविषमबन्धत्वं, अनतिविस्तीर्णपरस्परसंबद्धसर्गादित्वं, आशीर्नमस्कारवस्तुनिर्देशोपक्रमत्वं वक्तव्यार्थप्रतिज्ञानतत्प्रयोजनोपन्यासकविप्रशंसादुर्जन-सुजन-स्वरूपवदादिवाक्यत्वं, दुष्करचित्रादिसर्गत्वं, स्वाभिप्रायस्वनामेष्टनाममङ्गलाङ्कितसमाप्तित्वमिति। अर्थवैचित्र्यं यथा- चतुवर्गफलोपायत्वं, चतुरोदात्तनायकत्वं, रसभावनिरन्तरत्वं, विधिनिषेधव्युत्पादकत्वं, सुसूत्रसंविधानकत्वं, नगराश्रमशैलसैन्यावसार्णवादिवर्णनं, ऋतुरात्रिंदिवार्कास्तमयचन्द्रोदयादिवर्णनं, नायकनायिकाकुमारवाहनादिवर्णनं, मन्त्रदूतप्रयाणसंग्रामाभ्युदयादिवर्णनं, वनविहारजलक्रीडा-मधुपान-मानापगमरतोत्सवादिवर्णनमिति। उभयवैचित्र्यं यथा-रसानुरूपसदर्भत्वं, अर्थानुरूपछन्दस्तवं, समस्तलोकरञ्जकत्वं सदलङ्कारवाक्यत्वं, देशकालपात्रचेष्टाकथान्तरानुषञ्जनं मार्गद्वयानुवर्तनं चेति। तत्रैव, पृ. ४५५-४६०

४. सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः। सद्वंशः क्षत्रियो वापि धीरोदात्तगुणन्वितः।
एकवंशभवाभूपाः कुलजा बहवोऽपि वा। शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते।
अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसन्धयः। इतिहासोद्भवं वृत्तमन्यद्वा सज्जनाश्रयम्।
चत्वारस्तस्य वर्गाः स्युस्तेष्वेकं च फलं भवेत्। आदौ नमस्क्रियाशीर्वावस्तुनिर्देश एव वा।
क्वचिन्निन्दाखलादीनां सतां च गुणकीर्तनम्। एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः।

**नगरार्णव-शैलर्तुचन्द्रार्कोदय-वर्णनम्।**
**उद्यानसलिलक्रीडामधुपानरतोत्सवाः ॥**
**विप्रलम्भो विवाहश्च कुमारोदयवर्णनम्।**
**मन्त्रद्यूतप्रयाणाजिनायकाभ्युदया अपि॥**
**एतानि यत्र वर्ण्यन्ते तन्महाकाव्यमुच्यते॥**[1]

इत्थं प्राचीनकाव्यशास्त्रिणां महाकाव्यस्य उपर्युक्तलक्षणेपरि विचारं कुर्मश्चेत् प्रतिभाति यदेते आचार्याः मुख्यतया महाकाव्यगतानां सर्गं, कथावस्तु, नायकं, रसं, वर्णनीयविषयं, छन्दश्चाधिकृत्य विचारविमर्शं कृतवन्तः। महाकाव्यस्याकारसन्दर्भे भामहस्तु न किमपि वक्ति परं 'महतां च महच्च' इत्युक्त्वा महाकाव्यस्य विपुलतां सङ्केतितवान्। महाकाव्यं सर्गबद्धं भवेदिति तु प्रथमतया स एव ज्ञापयति। विश्वनाथः विपुलतायाः अधस्तना सीमा निर्धारिता। सर्गस्य संख्या अष्टभ्यः न्यूना न स्यात्। परं अधिकाधिकं कियती संख्या स्यादिति न विज्ञापयति। केवलं 'नातिदीर्घा' कथयित्वा मौनं धारयति। एवं भामह-दण्डि-रुद्रटप्रभृतयः पूर्वाचार्याः रामायण-महाभारतमहाकाव्ययोः महतीं सर्गसंख्यां दृष्ट्वा न तस्य किमपि निर्धारणं कृतवन्तः। विश्वनाथस्य समक्षं परवर्तिनां कालिदास-भारवि-श्रीहर्ष-माघ-भट्टिप्रभृतीनां महाकाव्यान्यपि आसन्। अत एतेषु सर्वेष्वपि पृथक्-पृथक् सर्गसंख्यां दृष्ट्वा न्यूनातिन्यूनसर्गसंख्या तु निर्धारिता परम् अपरसीमा न निर्धारिता- 'नातिस्वल्पा नातिदीर्घा सर्गाष्टाधिका इह'।

महाकाव्यस्य नायकः कीदृशः स्यादिति काव्यशास्त्रिणः विज्ञापितवन्तः। आचार्यभामहः सूत्रात्मकरीत्या तस्य स्वरूपं निर्दिशति। सः नायकसन्दर्भे द्वे परम् अतीव महत्त्वपूर्णे वैशिष्ट्ये निर्दिशति-१. महताम् २. सदाश्रयम्। अर्थात् महाकाव्यस्य नायकः महान् अप च सज्जनः स्यात्। नायकः देवः स्यात् वा ब्राह्मणः स्यात् वा क्षत्रियः स्यादिति किमपि न वक्ति। मानवः स्यात् तस्य तात्पर्यं वर्तते यत् कश्चिदपि नायकः स्यात् परं सज्जनः महत्त्वशाली च भवेत्। भामहस्य एतस्य वैशिष्ट्यद्वयस्यान्तर्गते सर्वमपि वैलक्षण्यमन्तर्भवति। परवर्त्ती दण्डी 'चतुरोदात्तनायकमि-ति रुद्रटः 'तत्र त्रिवर्ग सक्तं समिद्धशक्तित्रयं च सर्वगुणम्। रक्तसमस्तप्रकृतिं विजिगीषुं नायकं न्यस्येदिति' विश्वनाथश्च 'सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः। सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः। एकवंशभवाभूपाः

---

नास्तिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह। नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते।
सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत्। संध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः।
प्रातर्मध्याह्नमृगयाशैलर्तुवनसागराः। संभोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः।
रणप्रयाणोपयममन्त्रपुत्रोदयादयः। वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह।
कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा। नामास्य सर्गोपादेयकथया सर्गनाम तु। सा.द.-६/३१६-३२५

१. प्र०रु०-६८-७०

कुलजा बहवोऽपि वे'ति कथयन्तो अन्यान्यपि विशेषणानि नायके योजितानि परमेतानि भामहस्य व्याख्या एव प्रतीयन्ते। रुद्रटः नायकस्य वैशिष्ट्ये अन्यदेकं विशेषणमयोजयत् यत्सर्वथा भिन्नं वर्तते। विश्वनाथः महाकाव्यानां प्रायशः नायकं क्षत्रियमवलोक्य तस्योल्लेखमकरोत् परं तं विकल्पे एव अस्थापयत्। रघुवंशमभिलक्ष्य समानवंशीयानां बहुनायकानां निर्देशं कृतवान्। एकनायकस्य परिकल्पना तु पूर्वतः आसीदेव। नायकसन्दर्भे महाकविवाल्मीकेः स्थापना अतिमहत्त्वपूर्ण वर्तते। यत्र सः नायकसन्दर्भे नारदेन विचारविमर्शं कुरुते। जिज्ञासायुतो असौ आदिकविः गुणगणनापुरस्सरं तादृशं उच्चादर्शसम्बद्धं नायकमन्विषमाणः नारदं पृच्छति-

**"कोऽन्वस्मिन् साम्प्रतं लोके" गुणवान् कश्च वीर्यवान्।**
**धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः॥**

**चारित्र्येण च को युक्तः सर्वभतेषु को हितः।**
**विद्वान् कः कः समर्थश्च कश्चैकप्रियदर्शनः॥**

**आत्मवान् को जितक्रोधो द्युतिमान् कोऽनसूयकः।**
**कस्य विभ्यति देवाश्च जात-रोषस्य संयुगे॥**

**एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे।**
**महर्षे त्वं समर्थोऽसि ज्ञातुमेवं विधं "नरम्"॥**[1]

अर्थात् बाल्मीकि मतेऽपि नायकः साम्प्रतिक काले प्रसिद्धः उदात्तगणयतश्च कश्चन् नरः भवति।

रसविषये भामहः कथयति यत् रसानां योजना भवेत् परं असङ्कीर्णतया भवेत्। केनचिदेकेन रसेन अपरस्य हानिः गौणत्वं वा मा भवेत्। पृथक-पृथक् स्वतन्त्ररूपेण तस्य वर्णनं स्यात्-रसैश्च सकलं पृथक्' रुद्रटोऽपि सर्वेषां रसानां तत्र योजना स्वीकरोति। आनन्दवर्धनः प्रथमतया कस्यचिदेकस्य रसस्य प्राधान्यं अङ्गीत्वं वा स्वीकृत्य वस्तुतः अन्येषाम् अङ्गभावम् अप्रकटयत्। महाकाव्यस्य इतिवृत्तविषयेऽपि भामहः न किमपि वक्ति केवलं नायकस्य गुणानाश्रित्य तस्य मन्तव्यमवगमयितुं शक्यते। अर्थात् तन्मते इतिवृत्तं महतां सज्जनानाञ्च चरिताश्रितं स्यात्। प्रख्यातकल्पितयोरितिवृत्तयोः उल्लेखम् असौ न कुरुते। दण्डि-रुद्रट-विश्वनाथप्रभृतयः स्पष्टतया निर्दिशन्ति यत् महाकाव्यस्येतिवृत्तं प्रख्यातम् इतिहासाश्रितं वा उत्पाद्यं स्यात्।

वर्णनीयविषयमधिकृत्य भामहः वदति यत् महाकाव्ये राजनैतिकमन्त्रणं, दूतसम्प्रेषणम् सैन्याभियानं युद्धवर्णनं कथमपि नायकस्याभ्युदयं प्रदर्शयेत्। अथ च 'ऋद्धिमत्' इत्यनेन सः नागरिक-प्राकृतिकादि समस्तवैभववर्णनस्य सङ्केतमकरोत् यत्काव्यवर्णनदृष्ट्या समुचितं भवति। एतमेव विस्तरेण दण्डि-

---

१. वा.रा.-१/२.५

विश्वनाथौ निर्दिष्टवन्तौ। दण्डी नगरस्य, समुद्रस्य, प्रस्तरस्य, ऋतोः, चन्द्रोदयस्य, सूर्योदयस्य, उद्यानस्य, जलक्रीडनस्य, मधुपानस्य, रतोत्सवस्य, नायकनायिकयोः विप्रलम्भस्य, विवाहस्य, कुमारजन्मनः तथ भामहसम्मतानां मन्त्रदूतप्रयाणाजिनायकाभ्युदयानाञ्च वर्णनं महाकाव्ये स्वीकरोति। विश्वनाथोऽपि इत्थमेव वर्णनीयविषयं निर्दिशति। तथाहि- संन्ध्या-सूर्य-चन्द्र-रात्रि-प्रदोशवेला-अन्धकार-दिन-प्रातः-मध्याह्न-मृगया-शिला-त्रदतु-वन-सागर सम्भोग-विप्रलम्भ-मुनि-स्वर्ग-नगर-यज्ञ-संग्राम-यात्रा-विवाह-मन्त्रणा-पुत्रजन्म-नयकाभ्युदयेति क्वचित् खलादीनां निन्दां, सज्जनानां प्रशंसा चापि यथोपयुक्तं वर्णनीया। एतदतिरिक्तं दण्डिविश्वनाथौ महाकाव्यास्यारम्भः नमस्कार-वस्तुनिर्देश-आशीर्वादात्मकेन वा मङ्गलाचरणेन कर्तुं निर्दिशतः। यत्सर्वथा नवीनमुपस्थापनं वर्तते एतयोः। रुद्रटः कल्पितकथाधारिते महाकाव्ये प्रथमं नगरम्, नायकवंशप्रशंसा, शरदाद्यृतुः, शत्रुकृत्याधारितनायकस्य क्षोभः, युद्धाय प्रयातुः नायकस्य वर्णनमाध्यमेन नागरिकाणां समुदायः, जनपदः, पर्वतं, नदी, अटवी, वनम्, सरोवरं, मरुभूमिः, समुद्रः, द्वीपं, भुवनं, सैनयविरामस्थानम्, यथावसरं युवकानां क्रीडनम्, सूर्यास्तं अन्धकारमयी सन्ध्या, चन्द्रोदयः, रात्रिः, युवक-युवतीनां नृत्योत्सवः, समूहगानम्, मद्यपानम्, शृङ्गारप्रसङ्गश्चेति सर्वं यथावसरं वर्णनीयम्। विद्यानाथस्तु स्वमहाकाव्यलक्षणे केवलं वर्णनीयविषयमेव उपस्थापितवान्। तत्सर्वमपि भामह-रुद्रट-जगन्नाथश्च उक्तवन्तः। न तस्य लक्षणे किमपि नावीन्यम्।

छन्दस्सन्दर्भे दण्डी कथयति यत् महाकाव्येषु श्रुतिसुखदवृत्तस्य प्रयोगो भवति। परं सर्गगत तत्परिवर्तनमधिकृत्य न सः किमपि निर्देशं कुरुते। केवलं विश्वनाथः एव कथयति यत् प्रायशः सर्गान्तर्गते एकमेव वृत्तं स्यात् अन्ते वृत्तपरिवर्तनमपेक्षते। क्वचित्तु भिन्नवृत्तात्मकोऽपि सर्गः उपलभ्यते। एवं वृत्तविषयकः कश्चन दृढतरः नियमो नास्ति। परं प्रायशः सर्गान्ते एव वृत्तपरिवर्तनं दृश्यते।

महाकाव्यस्य उद्देश्यं भामहः चतुर्वर्गावाप्तिः कथयति अथ च तेष्वपि अर्थस्य प्राधान्यं निर्दिशति। तदानीं राजव्यवस्थायां प्रायशः कवयः राजाश्रिताः आसन्। अथ च महाकाव्यानां नायकः प्रायशः राजानः एव आसन्। अतो महाकाव्यरचनायाः उद्देश्यम् अर्थावाप्तिः प्रमुखतया कथयति। रुद्रटः चतुर्वर्गेषु धर्मार्थकामसिद्धीति त्रयमेव महाकाव्यस्य फलं मनुते। यद्यपि दण्डि-विश्वनाथौ चतुर्णामपि वर्गाणां सिद्धिं तदुद्देश्यं फलं वा स्वीकुरुतः।

कथावृत्तस्य योजना पञ्चसन्धिसमन्विता स्यात्। अनेन महाकाव्यस्य कथायां सुसम्बद्धता आगच्छति। पञ्चसन्धीनां योजना यद्यपि रूपकेषु भवति परं कालान्तरे एतावत्याः विस्तृतकथायाः संयोजनार्थं सुसम्बद्धार्थं महाकाव्येऽपि तस्य प्रयोगः अपेक्षितः सञ्जातः। भामह-दण्डि-रुद्रटादयस्तु सन्धियोजनाय निर्दिशन्त्येव आनन्दवर्धनोऽपि स्वीकरोति यत् सन्धि-सन्ध्यङ्गस्य योजना केवलं शास्त्रदृष्ट्यैव न सम्पादनीया प्रत्युत रसाभिव्यञ्जनदृष्ट्यापि अतीवमहत्त्वपूर्णा वर्तते।[१]

---

१. ध्वन्यालोक-३/१२

**सन्धिसन्ध्यंगघटनं रसाभिव्यक्त्यपेक्षया।**
**न तु केवलया शास्त्रस्थितिसम्पादनेच्छया॥**

भामहः महाकाव्यस्य निर्माण औचित्यतत्त्वस्यापि सङ्केतं कुरुते। सः 'युक्तं लोकस्वभावेन' पदेन विवक्षति यत् महाकाव्यस्य वर्ण्यवस्तु सर्वथ समाजानुरूपं लोकप्रत्ययकारकं विश्वनीयञ्च स्यात्। किमर्थं लोकानुरूपं वर्ण्यवस्तु सयादिति प्रक्षस्य समुचितम् उत्तरम् आनन्दवर्धनः स्वीये ध्वन्यालोके ददाति। सो वक्ति यत् अनौचित्यं वस्तुतः रसभङ्गस्य प्रमुखं कारणं भवति। अतो महाकाव्यं निरन्तरं रसम् उद्गरेत् एतदर्थं सर्वथा लोकौचित्यसमन्वितमेव वर्णनं करणीयम्-

**अनौचित्यादृते नान्यद्रसभंगस्य कारणम्।**
**आचित्योपनिबन्धस्तु रसस्योपनिषत्परा॥**[1]

एवं महाकाव्यानुशीलनेन विद्धयति यत् महाकाव्यस्य प्रतिमानं कालानुरूपं परिवर्त्तनशीलमस्ति। पूर्वाचार्याणां लक्षणमेतत् प्राचीनमहाकाव्यानां लक्ष्तीकृत्य वर्तते। परमिदानीं समाजस्य परिवर्तनेन महाकाव्यानां नायक-वर्ण्यविषय-रचनोद्देश्यानि परिवर्तितानि। इदानीं महाकाव्यस्य नायकः न केवलं राजा न च कश्चन जातिविशेषः लिङ्गविशेषो वा भवति। इदानीं लेखनस्य प्रवृत्तस्य परिवर्तिताः सञ्जाताः। इदानीं संस्कृतरचनाकाराः प्राचीनकाव्यैः पर्यापतं प्ररणां गृह्णान्ति परं न तस्य अन्धानुारणं कुर्वन्ति प्रत्यत स्वनवनवेन्मेषशलिप्रतिभया नवीनमपि चिन्तनं प्रस्तुवन्तिं एतेषां महाकाव्येषु परम्परां प्रति श्रद्धाभावः आधुनिकतां प्रति च सहजाकर्षणं दृश्येतो। अत एतैः परिवर्त्तमैः-

समन्वितस्य नवीनमहाकाव्यस्य लक्षणं आधुनिककाव्यशास्त्रसीक्षकाः निर्दिशन्ति। तेषु प्रामुख्यं भजन्ते आचार्यरहसविहारीद्विवेदी, आचार्यराधावल्लभत्रिपाठी, अभिराज-राजेन्द्रमिश्रश्च।

आचार्यरहसविहारीद्विवेदी प्राचीनार्वाचीनानां प्रवृत्तिं स्वसूक्ष्मेक्षिकया पश्यन् उभयप्रवृत्त्यनुरूपं महाकाव्यलक्षणं निर्दिशति। तन्मते महाकाव्यं सर्गबद्धं छन्दोबद्धञ्च भवति। सहृदथहृदयाह्लादकाभ्यां शब्दार्थाभ्यां रमणीयम्, संवादयोजनया शिल्पविधानैश्च परिपूर्णम्, निरन्तरं रसमयम्, क्लिष्टप्रयोगेन रहितम्, वैभवसम्पन्नम्, श्रेष्ठगुणसम्पन्नेन लोकप्रसिद्धेन च नायकेन समन्वितं स्यात्। अथ च कल्याणमयम्, लोकस्वभाववर्णनयुतं भवेत् तस्य विषयवस्तु, पात्रचित्रणं, रचनाशिल्पं, उद्देश्यञ्च महतामपि महत्स्यात्-

**सर्गैर्वृत्तैश्च बद्धं सहृदयहृदयाह्लादि-शब्दार्थरम्यं,**
**संवादैश्चोच्चशिल्पैः सततरसमयं ग्रन्थिमुक्तं समृद्धम्।**
**पात्रं स्याद् यस्य मुख्यं परमगुणयुतं लोकविख्यातवृत्तम्,**
**भव्यं लोकस्वभावं महदपि महतां तन्महाकाव्यमास्ते॥**[2]

१. ध्वन्यालोक, ३/१०
२. अ.का.सू. ३/१/३
३. अ॰का॰सू॰, ३/१/३

आचार्यद्विवेदस्य लक्षणं संक्षिप्तं सारगर्भितं मनोरमवृत्ताधारितञ्च वर्तते। अत्र पूर्वाचार्याणां मन्तव्येन साकं स्वीयोद्भावनामपि परं वैलक्ष्ण्येन असौ प्रस्तुतवान्। संवादयोजनायाः काव्ये महन्महत्त्वं वर्तते। एतन्मते पात्राणाम् उत्कृष्टसंवादयोजनया कथानकं प्रभावपूर्ण पात्राणां चरित्रञ्च अनावृतभावेन पाठकस्य समक्षम् प्रस्तुतं भवति। शिल्पविधानेन कथावस्तुनः मार्मिकस्थलस्य परिज्ञानम्, जीवनदर्शनस्य अभिव्यञ्जनम्, पात्राणां युगोचितं चरितविकासादीनाञ्च सङ्केतं कुरुते। साम्प्रतं सीताचरितम्, सुभाषचरितम्, इन्दिराजीवनम्, तिलकयशोऽर्णवम्, प्रभृतिनि विविधनायकाधारितानि महाकाव्यानि विरच्यन्ते अतएव सः नायकसन्दर्भे कथयति यत् महाकाव्यस्य नायकः कस्यचिदपि जातेः, वंशस्य, स्थानस्य, लिङ्गस्य वा स्यात् परं श्रेष्ठगुणसम्पन्नः तथा च लोकप्रसिद्धः स्यात्।

आचार्यराधावल्लभत्रिपाठी सूत्रशैल्यां महाकाव्यं लक्षयति यत्-**पद्यात्मकं समग्रजीवननिरूपणपरं महाकाव्यम्। गीतैतिह्यपुराणलोककथाभेदादस्य नानात्वमिति।**[३] अर्थात् आधिभौतिक-आधिदैविक-आध्यात्मिकलोकात्मकस्य समग्रजीवनस्य यत्र उत्कृष्टवर्णनं प्राप्यते तदेव वस्तुतः महाकाव्यम्। तच्च गीताधारितम्, ऐतिह्याधारितम्, पुराणाधारितम्, लोककथाधारितमिति च भेदेन बहुविधं भवति। गीताधारितं यथा **क्षमारावपण्डितायाः सत्याग्रहगीता, राधावल्लभस्य सत्यानन्दगीता च। ऐतिह्याधारितं यथा विल्हणस्य विङ्क्रमाङ्कदेवचरितम्, पौराणिकाधारितं** यथा **किरातार्जुनीयं शिशुपालवधञ्च।** लोककथाधारितं यथा **बृहत्कथा, कथासरित्सागरो वा**।

आचार्यत्रिपाठिनः लक्षणं तात्त्विकं सदपि बहुव्याख्यामपेक्षते।

आधुनिककाव्यशास्त्रीयाचार्येषु अभिराजराजेन्द्रमिश्रः साहित्यदर्पणकारविश्वनाथसमः महाकाव्यस्य विस्तृतं लक्षणं प्रस्तौति। महाकाव्यस्य सर्वमपि तत्त्वं साक्षात्कुर्वाणः असौ द्वादशश्लोकेषु समग्रतया तस्य स्वरूपमभिदधाति। एतन्मते महाकाव्यं लोकवन्दनीयनायकाधारितं विश्वबन्धुत्वोद्घोषयितृविश्वमङ्गल-व्यवस्थापयितृ-सर्गबन्धं भवति। नायकस्तस्य कश्चन देवः, प्रजावत्सलः नरपतिः, समुज्ज्वलचरितः सदाचारी सत्पुरुषो वा भवति। अन्यच्च लोकोत्तरगुणवान् उच्चादर्शवान् पुरुषः नायकस्तु भवत्येव परं काचित् महीयसी महिलापि महाकाव्यस्य प्रमुखनायिका भवितुं शक्नोति। अत्र स्त्रीपुल्लिङ्गयोः विचारः न कर्त्तव्यः। महाकाव्ये प्रातः-सन्ध्या-रात्रि-सूर्य-चन्द्रोदयाः नक्षत्र-वनोद्यान-नदी-सागर-जलप्रपात-पर्वत-मेघ-ग्रामाश्रम-नगर-आश्रम-दुर्ग-सैन्य-रणप्रयाण-पुत्रजन्मादिवृत्तान्त-निर्धनकुटी-चित्रणादीनाम् इतिवृत्तानुकूलमेव न तु पूर्वाग्रहवशात् वर्णनं कर्त्तव्यम्। अन्यथा अस्वाभाविकवर्णनेन सहृदयनां सन्तुष्टिर्न भविता। कवेरुद्देश्यं भवेत् महाकाव्यमाध्यमेन सत्यस्य, शिवस्य, लोकमङ्गलस्य च स्थापनम् अत इतिवृत्ते कल्पनयापि कथायाः शरीरं निर्माय एतेषां समायोजनं कर्त्तव्यम्। सर्गाणां संख्या अष्टभ्यः न्यूना चतुर्विंशतेः अधिका न भवेत्। अनपेक्षितया सर्गसंख्यया वर्णनेन च पाठकानां उद्वेगः न कर्त्तव्यः। लोकवृत्तस्य वर्णनम् अवश्यं कर्त्तव्यं यतोहि तन्मूलकथोपकारकलोकचित्रणेनैव महाकाव्यस्य महत्ता तिष्ठति। महकाव्यस्य उद्देश्यं धर्मार्थकामेति पुरुषार्थत्रयेषु कस्यचिदेकस्यावाप्तिः। शृङ्गार-वीर-

शान्तरसेषु कश्चिदेकः रसः अङ्गितया योजनीयः। सहृदयसन्तुष्टये छन्दोऽलङ्काराणां वैविध्यपरिपूर्णः प्रयोगः करणीयः। महाकाव्यस्य यशस्करं नामकरणं कथावैशिष्ट्यं नायकं वा आश्रित्य कर्त्तव्यम्। अथवा आचार्यसमः प्रतिभाविशेषयुतः कविः स्वविलक्षणबुद्ध्या नूनमेव महाकाव्ये यत्किमपि नूत्नं तत्त्वं प्रतिष्ठापययितुं क्षमस्तदा तत्त्वमप्याश्रित्य महाकाव्याभिधानं कर्तुं शक्यते। यथा लरोकवन्द्यजनाश्रयं महाकाव्यं यथा **सुबोधचन्द्रपन्तस्य झाँसी शवरीचरितम्, विश्वमङ्गलाश्रयं महाकाव्यं यथा माधवभट्राइ-प्रणीतं सत्यसाईचरितम्, विष्णुदत्तशर्मप्रणीतं गुरुनानकदेवचरितम् बलभद्रशास्त्रि-प्रणीतं भागीरथीदर्शनमित्यादयः-**

**सर्गबन्धो महाकाव्यं लोकवन्द्यजनाश्रयम्।**
**ख्यापयद्विश्वबन्धुत्वं स्थापयद्वि श्वमङ्गलम्॥**

**नायकस्तत्र देव स्यात्प्रजाबन्धुरथो नृपः।**
**चारुचर्योऽथवा कोऽपि सज्जन श्चरितोज्ज्वलः॥**

**प्रातस्सन्ध्यानिशीथेन्दुभास्करोदयतारकाः ।**
**वनोद्याननदीसिन्धुसप्रपाताद्रिबलाहकाः ॥**

**ग्रामाश्रमपुराऽरामदुर्गसैन्यरणोद्यमाः ।**
**पुत्रजन्मादिवृत्तान्ताः पामरावाससङ्कथा॥**

**इतिवृत्तानुरोधात्तु वर्णनीया च चाऽन्यथा।**
**प्रसह्य वर्णने तेषां न च तृप्तिर्न वा यशः॥**

**यच्छिवं यच्च सत्यं स्यादथवा लोकमङ्गलम्।**
**वर्णनीयं प्रकल्प्यापि कथांशीकृत्य सादरम्॥**

**सर्गा अष्टाधिकाः सन्तु कथापिस्तृतिसम्मताः।**
**अष्टत्रिगुणतां यावत्सर्गसंख्या प्रथीयसी॥**

**नोद्वेगः कविना कार्यः पाठकानां रसात्मनाम्।**
**सर्गसंख्यादिविस्तारैर्वर्णनैर्वाऽनपेक्षितैः ॥**

**लोकवृत्तं न हातव्यं मूलवृत्तोपकारकम्।**
**लोकचित्रणगर्भं हि महाकाव्यं महीयते॥**

**त्रयाणां पुरुषार्थानां कश्चिदन्यतमो रसः।**
**सयत्नमङ्गीकर्त्तव्यः कविना प्रतिभावता॥**

**छन्दोऽलङ्कारसन्दर्भाः भूरिवैविध्यमण्डिताः।**
**महाकाव्ये प्रयोक्तव्या भावुकानां प्रतुष्टये॥**

---

१. अभिराजयशोभूषणम्, उन्मेष-५/६६-८०

**लोकोत्तरगुणादर्शः पुरुषो नायको भवेत्।**
**महीयसी पुरन्ध्री वा नाऽत्र कार्या विचारणा॥**

**कथावैशिष्ट्यमालक्ष्यं समज्ञां नायकस्य वा।**
**करणीयं महाकाव्यस्याभिधानं यशस्करम्॥**

**प्रतिष्ठापयितुं नूनं महाकाव्ये स्वयं कविः।**
**आचार्यप्रतिभो नूनं यदि वा भवति क्षमः॥**[1]

मिश्रवर्यस्य प्रकृतमहाकाव्यलक्षणं पूर्वाचार्याणां लक्षणेषु मध्ये स्थाप्य विचारं कुर्मश्चेत् प्रतिभाति यदेतेन महाकाव्यस्य केषुचित् तत्त्वेषु सर्वथाभिनवं स्वीकरणयोग्यञ्च तथ्यं प्रस्तुतम्। कस्यचिच्च अनिश्चिततथ्यस्य निर्धारणं कृतम्। महाकाव्यगतसर्गाणं संख्याविषये प्राचीनार्वाचीनानां सर्वेषां काव्यशात्रिणां मन्तव्यं पश्यामश्चेत् जानीमो यन्न्यूनतमा सर्गसंख्या तु तैः निर्धारिता परं अधिकतमा कियती संख्या स्यादिति नैव निश्चिता। मिश्रवर्यैः प्रथमतया महाकाव्यगतसर्गाणाम् अष्टविंशतिसंख्या निर्धारिता। यद्यपि रामायण-महाभारतेति महाकाव्यद्वयस्य सर्गसंख्या एतदन्तर्गता न समाविशति। पुनरपि मिश्रवर्यस्य मन्तव्यं न कथमपि औचित्यविहीनं वर्तते। कालिदासादारभ्य अद्यावधिं यानि महाकाव्यानि विरचितानि सन्ति तेषु प्रायशः सर्वाण्यपि एतदन्तर्गतानि भवन्ति। मिश्रवर्येण सर्गाणाम् आदर्शसंख्या निर्धारिता वर्तते।

महाकाव्यस्योद्देश्यं चतुर्वर्गावाप्तिः, त्रिवर्गावाप्तिः अथवा तेषु कस्यचिदेकस्यावाप्तिरिति प्रायः सर्वे पूर्वाचार्याः कथयन्ति मिश्रवर्योऽपि एतं स्वीकरोति। परं महाकाव्यस्य स्वरूपाख्याने विश्वबन्धुत्वस्य उद्घोषयितृतया विश्वमंगलस्य व्यस्थापयितृरूपेण प्रथमतया एतेनैव प्रतिपादितम्। काव्यप्रजोजनसन्दर्भे रहसविहारीद्विवेदी-रेवाप्रसादद्विवेदीप्रभृतयः युगावश्यकतापूर्तेः, राष्ट्रप्रबोधस्य, विश्वहितस्य च वार्तां कृत्वा किञ्चित् निर्दिष्टवन्तः। मिश्रवर्यः यद् व्यापकं प्रयोजनं विज्ञापितवान् तत्सर्वथा उचितमेव वर्तते। यतोहि साहित्यं न कस्यचिद् व्यक्तेः, समाजस्य, देशस्य, वा भवति तत्तु समस्तस्यापि विश्वस्य कृते उपयोगि भवति। न जाने साहित्यस्य का सूक्तिः किं वृत्तान्तं का च कथा मानवस्य व्यक्तित्वं परिवर्त्य मानवस्य समाजस्य देशस्य च उद्धारकः स्यात्। हिन्दीकवेः 'बिहारी' इत्यस्य एका सूक्तिरेव[१] राजानं प्रजाहिताय प्रेरितवती। अतो नूनमेव महाकाव्येन विश्वबन्धुत्वस्य भावना विश्वमङ्गलस्य च प्रतिष्ठा भवितुं शक्नोति।

सन्ध्या-सूर्यास्त-चन्द्रोदयप्रभृतयोः वर्णनीयविषयाः पूर्वाचार्यवत् मिश्रवर्योऽपि गणयति तत्र न किमपि न्यूनत्वं वर्तते। परं महाकाव्ये सत्यस्य, शिवस्य, मङ्गलस्य च कथांशेन संयोजनं कृत्वा वर्णनं कर्त्तव्यमिति भूषणकारस्य सर्वथा औचित्यसमन्वितं लोकोपकारकं चिन्तनं वर्तते यत्सर्वथा

१. नहि परागु नहि मधुर मधु, नहि विकासु एहि काल।
अली, कली हि सौं बँध्यौ, आगे कौन हवाल।। -बिहारी सतसई-३८

अभिनन्दनीयमस्ति। मिश्रवर्यस्य एका इतोऽपि नवीना स्थापना वर्तते। नायकसन्दर्भे सः कथयति यत् नायकविषये लिङ्गविशेषस्य विचारः नैव कर्त्तव्यः यदि पुरुषनायकस्य वैशिष्ट्यं महिलायामपि भवेत् काचन् स्त्री अपि महीयसी वर्तते चेत् सापि नायकपदमधिष्ठातुं शक्नोति। इदानीं महिलाप्रधानकथानकमाश्रित्य अनेकानि महाकाव्यानि विरचितानि सन्ति। यथा रेवाप्रसादद्विवेदस्य 'सीताचरितम्' बलभद्रशास्त्रिणः 'इन्दिराजीवनम्' राजेन्द्रमिश्रस्य 'जानकीजीवनम्'।

इत्थं मिश्रवर्यस्य महाकाव्यलक्षणं सर्वथा आधुनिकमहाकाव्यानुकूलं वर्तते। यद्यपि काव्यस्वरूपमिव महाकाव्यलक्षणमपि इदानीं यावत् न समग्रतया सर्वस्वीकरणयोग्यं केनापि निर्दिष्टम्। सम्भवतः एतन्मूले नित्यनवीनानां प्रवृत्तीनां महाकाव्ये प्रयोग एव वक्तुं शक्यते। अतएव एतावन्ति लक्षणानि निर्मितानि सन्ति। परं मिश्रवर्यस्य लक्षणं सर्वथा आधुनिकं सर्वतत्त्वसमन्वितञ्च वर्तते। अतो पूर्णतया स्वीकर्तुं शक्यते। इति दिक्।।

## सन्दर्भग्रन्थसूची


१. अभिराजयशोभूषणम्, प्रो. अभिराजराजेन्द्रमिश्रः, वैजयन्तप्रकाशनम् इलाहाबादः-२००६

२. अभिनवकाव्यालङ्कारसूत्रम्, प्रो॰ राधावल्लभत्रिपाठी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयप्रकाशनम् वाराणसी-२००५

३. आधुनिककाव्यशास्त्रमीमांसा, सम्पादकौ डॉ॰ हरिनारयणदीक्षितः डॉ॰ किरणटण्डनश्च ईस्टर्नबुकलिंकर्सप्रकाशनम्, नवदेहली-१९९५

४. काव्यालङ्कारः, भामहः, सम्पादकः रमणकुमारशर्म्मा विद्यानिधिप्रकाशनम्,

५. हिन्दीकाव्यादर्शः, दण्डी, व्याख्याकारः डॉ॰ सत्यदेवचौधरी, अलङ्कारप्रकाशनम्, नवदेहली-२०२

६. काव्यालङ्कारः, रुद्रटः, व्याख्याकारः डॉ. सत्यदेवचौधरी, परिमलपब्लिकेशनम् नवदेहली-१९९०

७. काव्यानुशासनम्, हेमचन्द्राचार्यः, सम्पादकः रसिकलालः मुम्बईस्थमहावीरजैनविद्यालय-प्रकाशितम्-१९३८

८. ध्वन्यालोकः, आनन्दवर्धनाचार्यः, व्याख्याकारः आचार्यजगन्नाथपाठकः, चौखम्बाविद्याभवनम्, वाराणसी-२००९

९. प्रतापरूद्रयशोभूषणम्, श्रीविद्यानाथविरचितम्

१०. बिहारी सतसई का तुलनात्मक अध्ययन, डॉ॰ उर्मिला पाटिल, विद्याप्रकाशनम्, कर्णपुरम्-१९९३

११. साहित्यदर्पणम्, आचार्यविश्वनाथः, व्याख्याकारः शालिग्रामशास्त्री, मोतीलालबनारसीदास, नवदिल्ली-१९७७

१२. श्रीमद्वाल्मीकीयरामायणम्, व्याख्याकारः पं॰ रामतेजपाण्डेयः, चौखम्बा संस्कृतप्रतिष्ठानम्-वाराणसी

# उपनिषत्परामर्शादात्मतत्त्वं प्रकाशते

**डॉ. कमलेशमिश्रः**

मुमुक्षूणामिष्टसाधनस्यात्मदर्शनस्योपायत्वेन श्रवणमनननिदिध्यासनानि 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः[१]' इति श्रुतेः। स्पष्टा चात्रार्थक्रमेणोज्झितशब्दक्रमतत्त्वाच्छ्रवण-मनननिदिध्यासनेषु तत्त्वज्ञानजनकता।

वेदप्रामाण्यमनङ्गीकर्त्तृणामवैदिकत्वेन लब्धाभिधानानां बौद्धविशेषाणां नैरात्म्यदृष्टीनाम् 'आत्मा नास्ति' इति व्यपदेशेनाभावस्य प्रतियोगिनिरूपणाधीननिरूपणत्वेन ग्रहणादत्राप्यात्मत्वावच्छिन्नप्रतियोगिताका-भावत्वेनार्थावबोधान्न तदलीकत्वम्, अलीकप्रतियोगिकाभावस्याप्रसिद्धेः।

ननु नात्राप्रसिद्धिः 'नास्ति आत्मा अजातत्वात् शशविषाणवदिति[२]' अनुमानमानेनोपदिष्टत्वादिति चेन्न, कुत्रापि सत्तारहितस्याभावबोधाभावात्, अभावज्ञानं प्रति प्रतियोगिज्ञानस्यैव कारणत्वेनोपन्यासात्, 'शशशृङ्गं नास्ति' इत्यत्र शशस्य शृङ्गे सम्बन्धाभावत्वेन प्रतिपत्तेर्न तु शशशृङ्गरूपालीकद्रव्यनिषेधादरात्, शशशृङ्गयोश्च पृथक्त्वेन प्रसिद्धाभावाभावात् नित्यात्मनः स्वरूपतो जन्मराहित्यात् तत्त्वतो जनिराहित्यस्य च नास्तित्वसाधकत्वानुपलम्भात्। किञ्चात्मनः सर्वथास्तित्वास्वीकारे आश्रयासिद्धेर्नात्मनि नास्तित्वनिश्चयः।

न वा शरीरस्यात्मत्वं बालाद्यवस्थाभेदेन नानात्वात् जन्मास्तित्ववृद्धिपरिणामापक्षय-विनाशधर्मविशिष्टस्य तस्य जडत्वेनाभ्युपगमात्, शरीरनिवृत्तावपि तद्विनाशासम्भवात्।

न वेन्द्रियाणां करणत्वाद् वास्यादिवत्। श्रुतिस्मृतीतिहासोपनिषत्सु सुप्रसिद्धस्यास्य शरीरादिव्यतिरिक्तात्मनो जन्ममरणापक्षयवृद्धिविनाशराहित्यम् 'अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे[३]' इति स्मृतिप्रामाण्यात्।

**हन्ता चेन्मन्यते हन्तुꣳहतश्चेन्मन्यते हतम्।**
**उभौ तौ न विजानीतौ नायꣳहन्ति न हन्यते**[४]।। इत्युपनिषद्छष्टितश्च सिद्धम्।

---

१. बृह. २. अध्या. ब्राह्म. ५. मन्त्रः
२. न्यायवार्त्तिकम्
३. गीता. २/२०
४. कठोपनिषद्, २/१९

छेद्यत्वदाह्यत्वक्लेद्यत्वशोष्यत्वविधुरोऽयमात्मा नित्यत्वेन सर्वव्यापित्वेन स्थिरत्वेन निश्चलत्वेन कारणहीनत्वेन च परिकीर्त्तितः–

**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।**
**नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः**[५]॥ इति स्मृतिवचनात्।

अयमात्मा वर्जितनिजावस्थाप्रच्युतिर्निश्चलोऽपि मनसो जववत्तरः। आत्माभासमात्रमपि नेन्द्रियगोचरं कार्यमात्रं प्रति प्रतिबन्धकसंसर्गाभावस्य कारणत्वेन सर्वानुभवसिद्धतयाऽत्र मनोव्यापारव्यवधानस्य प्रतिबन्धकत्वेनावलोकनात्। अत एवाह ईशावास्योपनिषद्–

**अनजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्षत्।**
**तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति**[६]॥ **इति।**

न च सर्वदैकरूपस्य व्यापकस्य निष्कम्पस्यात्मनो मनोजवीयत्वं विरुद्धमिति वाच्यम्, निरुपाधिकसोपधिकमत्त्वेन विरुद्धभणितेरपि याथार्थ्योपपत्तेः। तात्पर्यभेदात्

**तदेजति तन्नैजति तद्दूरे तद्वान्तिके।**
**तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः**[७]॥

इति मन्त्रस्य मन्त्रणास्वादः। वर्षकोटिशतैरप्यविदुषामनधिगमादात्मनो दूरावस्थितिर्विदुषाञ्च तद्वैपरीत्यमिति भावोऽवधेयः। अविद्यानिमित्ते सर्वकार्यप्रलये सैन्धवघनवदनन्तरस्याबाह्यस्य कृत्स्नस्य प्रज्ञानघनस्यैकात्मनो निरन्तरत्वम्। अत एवाह श्रीशङ्कराचार्य ईशावास्योपनिषदि स्वविरचितभाष्ये "प्रज्ञानघन एव[८]" इति च शासनान्निरन्तरं[९] च इति।

अयमात्माऽसंस्कृतबुद्धिभिरविज्ञेयऽपि सूक्ष्मदर्शिभिश्च सूक्ष्मवस्तुनिरूपणपरयाऽग्र्यया बुद्ध्या प्रतिपद्यते

**एष सवेषु भूतेषु गूढात्मा न प्रकाशते।**
**दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः**[१०]॥

---

५. गीता., २/२४
६. ईशा.उप., ४
७. ईशा.उप., ५
८. बृह. उप., ४/५/१३
९. ईशा.उप., ५
१०. कठ. १/३/१२

इति कठोपनिषत्प्रामाण्यात्। सूक्ष्मदर्शिनश्च

**इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।**
**मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः**[११]॥ इति तत्त्वज्ञा इति।

न चात्मनोऽणुपरिमाणत्वं 'अणोरणीयान्महतो महीयान्'[१२] इत्यादिमन्त्रादिति वाच्यम्, नित्यस्वरूपात्मना संसारस्याण्वादेर्वस्तुनः आत्मवत्त्वान्नामरूपादिविशिष्टवस्तूनामस्योपाधित्वेन परिगृहीतत्वात्। चक्षुर्मात्रग्राह्यगुणस्य रूपस्यानवस्थानान्न चक्षुषा, वाचानभिधेयत्वान्न वाण्या सर्वप्राप्तिहेतुत्वेऽपि न तपसा निरंशात्मसाक्षात्कारः। अपगतेन्द्रियविषयसंसर्गजमलादिकलङ्कपङ्कानां ज्ञानप्रसादेन विशुद्धान्तःकरणानामवधृतसामर्थ्यानामुपहृतेन्द्रियाणामेकाग्रतादाढ्यान्निष्कम्पमनसां श्रद्धाशमदमवैराग्यसम्पदां ध्यायमानानां निष्कलतत्त्वसाक्षात्कारः

**न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा।**
**ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः**[१३]॥

इत्युपनिषत्प्रामाण्यात्।

अजन्माप्यत्मा स्वेश्वरीयशक्तियोगान्नीतजन्मा अत एवाह

**अजमपि जनियोगं प्रापदैश्वर्ययोगादगति च गतिमतां प्रापदेकं ह्यनेकम्।**
**विविधविषयधर्मग्राहिमुग्धेक्षणानां प्रणतभयविहन्तृ ब्रह्म यत्तन्नतोऽस्मि**[१४]॥

इति माण्डूक्योपनिषदि भाष्यकारकर्तृकवन्दनेति।

आत्मनो निरूपाधिकत्वं सोपाधिकत्वञ्चाङ्गीकर्तृभिः शोकः परित्याज्यः। आत्मनो निरुपाधिकत्वे

**अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते।**
**तस्मादेवं विदित्वेनं नानुशोचितुमर्हसि**[१५]॥ इति तत्त्वमवधेयम्।

सोपाधिकत्वे तु–

**अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम्।**
**तथापि त्वं महावाहो नैनं शोचितुमर्हसि**[१६]॥ इति।

एतेन चोपनिषत्सारभूतात्मतत्त्वदुग्धमेव गीतामृतमिति संप्रतिपन्नम्। अतः

**दुःखध्वंसे च निःशेषे निदानं निष्कलं महत्।**
**उपनिषत्परामर्शादात्मतत्त्वं प्रकाशते**॥ इति।

११. कठोपनिषद्, १/३/१०
१२. तत्रैव, १/२/२०
१३. मुण्डक., ३/१/८
१४. माण्डूक्योपनिषद् – भाष्यकर्तृकवन्दना – १
१५. गीता, २/२५
१६. तत्रैव, २/२६

# भारतीयदार्शनिकानां नये क्षेत्रज्ञतत्त्वविमर्शः

**स्वामी डॉ. अनुभवानन्दः**

औपनिषदानां तु अव्यक्तमव्याकृतमनिर्वचनीयमायाख्या परमेश्वरी शक्तिः। 'मम माया दुरत्यया'[१] बुद्धिः सर्गादौ तद्विषयमीक्षणम्। अहंकार ईक्षणानन्तरमहं बहु स्यामिति संकल्पः। तत आकाशादिक्रमेण पञ्चभूतोत्पत्तिरिति। न ह्यव्यक्तमहदहंकाराः सांख्यासिद्धा औपनिषदैरुपगम्यन्तेऽशब्दत्वादिहेतुरिति स्थितम्।

**मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।**[२]
**ते ध्यानयोगानुगता अपश्यन्दैवात्मशक्तिं स्वगुणैर्निगूढाम्।**[३]

इति श्रुतिप्रतिपादितमव्यक्तम्।

'तदैक्षत'[४] इतीक्षणरूपा बुद्धिः। 'बहु स्यां प्रजायेय'[५] इति बहुभवनसंकल्पोऽहंकारः। 'तस्माद्वा एतस्मादात्मन आकाश संभूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी।'[६] इति पञ्चभूतानि श्रौतानि। इच्छासुखे तत्स्थाने चेदं मे भूयादिति स्पृहात्मचित्तवृत्तिः काम इति राग इति चोच्यते। द्वेषदुःखे तत्साधने चेदं मे मा भूदिति स्पृहाविरोधिनी चित्तवृत्तिः क्रोध इतीर्ष्येति चोच्यते। सुखं निरुपाधीच्छाविषयीभूता धर्मासाधारणकारणिका चित्तवृत्तिः परमात्मसुखव्यञ्जिका। दुःखं निरुपाधिद्वेषविषयीभूता चित्तवृत्तिरधर्मासाधारणकारणिका। संघातः पञ्चमहाभूतपरिणामः सेन्द्रियं शरीरम्। चेतना स्वरूपज्ञानव्यञ्जिका प्रमाणासाधारणकारणिका चित्तवृत्तिर्ज्ञानाख्या। धृतिरवसन्नानां देहेन्द्रियाणामवष्टम्भहेतुः प्रयत्नः। उपलक्षणमेतदिच्छाग्रहणं सर्वान्तःकरणधर्माणाम्। तथा च श्रुतिः-

**कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव।**[७]

---

१. गीता ७.१४
२. श्वेताश्वेतरोपनिषत् ४.१०
३. श्वेताश्वेतरोपनिषत्
४. छा. उ. ६.२.३
५. छा. उ. ६.२.३
६. तै. उ. २.१
७. श्रुतिवचनम्

इति मृद्घट इतिवदुपादानाभेदेन कार्याणां कामादीनां मनोधर्मत्वमाह। एतत्परिदृश्यमानं सर्वं महाभूतादिधृत्यन्तं जडं क्षेत्रज्ञेन साक्षिणाऽवभास्यमानत्वात्तदनात्मकं क्षेत्रं भास्यमचेतनं समसिनोराहृदमुक्तम्। तत्रेदम् अवधातव्यं यत् दीपिकाकारैः न केवलं साङ्ख्यवेदान्तमतमभ्युपगत्य गीताशास्त्रालोचनं कृतमपि च सांख्यवेदान्तातिरिक्तदार्शनिकानां क्षेत्रज्ञविषयकं यत् गहनं चिन्तनं विद्यते तस्याऽपि सिंहावलोकनन्यायेन विवेचनं कृतम्।

**क्षेत्रविषये चार्वाकपक्षः**

चार्वाकनये शरीरमेवात्मा, स च चेतनः क्षेत्रज्ञ इति तच्छास्त्रे प्रसिद्धः। यतः—

**यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः।**
**भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥**

**अग्निहोत्रं त्रयो वेदादिस्त्रिदण्डं भस्मगुण्ठनम्।**
**बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः॥**

**अत्र चत्वारि भूतानि भूमिर्वाय्वानलानिलाः।**
**चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते॥**

**किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मद्शक्तिवत्।**
**अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः॥**

**देहस्थौल्यादियोगाच्च स एवात्मा न चापरः।**
**मम देहोऽयमित्युक्तिः सम्भवेदौपचारिकी॥**

**अङ्गनालिंगनाजन्यं सुखमेव पुमर्थता।**
**कण्टकादिव्यथाजन्यं दुःखं निरय उच्यते॥**

**लोकसिद्धो भवेद् राजा परेशो नाऽपरः स्मृतः।**
**देहस्य नाशो मुक्तिस्तु न ज्ञानान्मुक्तिरिष्यते॥**

**अग्निरुष्णो जलं शीतं शीतस्पर्शस्तथानिलः।**
**केनेदं चित्रितं तस्मात् स्वभावात् तद्व्यवस्थितिः॥**

**न स्वर्गो नाऽपवर्गो वा नैवात्मा पारलौकिकः।**
**नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः॥**

**पशुश्चेन्निहतः स्वर्गे ज्योतिष्टोमे गमिष्यति।**
**स्वपिता यजमानेन तत्र कस्मान्न हिंस्यते॥**

**मृतानामपि जन्तूनां श्राद्धं चेत् तृप्तिकारणम्।**
**गच्छतामिह जन्तूनां वृथा पाथेयकल्पनम्॥**

**स्वर्गस्थिता यदि तृप्तिं गच्छेयुस्त्वत्र दानतः।**
**प्रासादस्योपरिस्थानामिह कस्मान्न दीयते॥**

**यावज्जीवेत् सखं जीवेदृणं कृत्वा घृतं पिबेत्।**
**भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥**

**यदि गच्छेत् परं लोकं देहादेव विनिर्गतः।**
**कस्माद् भूयो न चायाति बन्धुस्नेहसमाकुलः॥**

**त्रयो वेदस्य कर्तारो भाण्डधूर्तनिशाचराः।**
**जर्फरीतुर्फरीत्यादिपण्डितानां वचः स्मृतम्॥**[८]

एतेन ज्ञायते यत् चार्वाकैकदेशनये शरीरमेव चेतनं तच्च क्षेत्रज्ञपदेन व्यपदिश्यते। उक्तं च दीपिकाकारेण–

**'शरीरेन्द्रियसंघात एव चेतनः क्षेत्रज्ञ इति लोकायतिकाः।'**[९]

एवं च केचन चार्वाका इन्द्रियस्य चैतन्यमभ्युपगच्छन्ति। अर्थात् इन्द्रियात्मेति। केचन तावत् मनसः चेतनत्वमभ्युपगच्छन्ति। वस्तुतः शरीरस्य इन्द्रियस्य वा चेतनत्वेऽपि शरीरेन्द्रियसंघात एव चेतनः स च क्षेत्रज्ञो भवतीति लोकायतिकानामाशयः।

## क्षेत्रज्ञविषये बौद्धपक्षः

बौद्धमते क्षेत्रज्ञपदार्थः– बौद्धमते आत्मानामकपदार्थतत्त्वस्याभावात् क्षणिकविज्ञानमेवात्मा तथाहि ज्ञानत्वस्य प्रमेयत्वव्यापकतया सर्वस्यापि विज्ञानरूपत्वं तच्च विज्ञानं क्षणिकम्, अतः क्षणिकविज्ञानमेवात्मेति वदन्ति, क्षणिकत्वं तन्मते द्वितीयक्षणवृत्तिध्वसंप्रतियोगित्वम्। तद्विज्ञानम् 'अयं घट' इति सविषयकं विज्ञानम्, तच्च जाग्रति स्वप्नेऽर्धसुषुप्तौ च वर्तते। आलयविज्ञाननिर्विषयकं विज्ञानं तच्च गाढसुषुप्तौ वर्तते, अतो न मरणप्रसंगः सुषुप्तस्य पूर्वपूर्वविज्ञानेन उत्तरोत्तरविज्ञानधाराप्रवाहोऽखण्डो वहतीति, सर्वादिकः क्षणिकविज्ञानात्मक आत्मा, एतदभिप्रायेण दीपिकाकारः पूर्वपक्षरूपेण बौद्धमतमभिलक्ष्य क्षेत्रज्ञस्य पदार्थविषये इत्थं भणति–

---

८. सर्वदर्शनसंग्रहः (चार्वाकदर्शनप्रकरणम्)

९. श्रीमद्भगवद्गी.गू.दी.पृ.सं. ६५५

**'चेतना क्षणिकं ज्ञानमेवाऽऽत्मेति सुगताः।'**[१०]

**न्यायनये क्षेत्रज्ञपदार्थविचारः**

न्यायमते तु ज्ञानं गुणपदार्थः तादृशज्ञानपदार्थस्य आश्रयाऽऽत्मा मृतशरीरेषु व्यभिचारात् शरीरं न चेतनमपि तु शरीरातिरिक्तं चेतनतत्त्वम् आत्मा भवति।

**'शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः।'**[११]

एवं च इन्द्रियाणां नाशेऽपि बाल्यचक्षुषानुभूतस्य पदार्थस्य कालान्तरे स्मरणसंभवाद् इन्द्रियं न चेतनम्। उक्तं च–

**'तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः।'**[१२]

मनसः चेतनत्वे सति तु मनसो न्यायनये अणुत्वात् तत्र प्रत्यक्षप्रयोजकमहत्परिमाणाभावात् मनोरूपात्मनो ये गुणाः ज्ञानादयः तेषामप्रत्यक्षत्वापत्तिः स्यात्। इत्यतः मनसो न चेतनत्वम्। उक्तं च–

**'मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत्।'**[१३]

एतेन ज्ञायते यत् शरीरेन्द्रियाद्यतिरिक्तं किमपि प्रदर्शयति। न्यायसूत्रकारः महर्षिगौतमः–

**'इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति।'**[१४]

एतत्प्रसङ्गे स्वयं दीपिकाकारः न्यायमतमुपास्थाप्य इत्थं भणति–

**'इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति नैयायिकाः।'**[१५] इति।

एतेन ज्ञायते यत् न्यायनये ज्ञानधिकरणात्मतत्त्वस्य शरीरादिव्यतिरिक्तत्वं स्वीकार्यमेवञ्च अद्वैतनये ज्ञानस्वरूपमात्मतत्त्वमभ्युपेयमित्यलम्।

---

१०. गू.दी.
११. कारिकावली ४८
१२. कारिकावली ४८
१३. कारिकावली ४९
१४. न्यायसूत्रम् १.१.१०
१५. गू.दी.पृ.सं. ६५५

# योगदर्शने संयमस्वरूपविमर्शः

**सुनीता कुमारी नागर**

आधुनिकयुगेऽखिलसंसारे व्याप्ताः विविधास्समस्याः तास्वपि प्रामुख्येनातङ्कवादः पर्यावरणप्रदूषण-भ्रष्टाचारादयः दृग्गोचरी भवन्ति। अतः एतासां समाधानं नितान्तमपेक्षितम्। साम्प्रतिकयुगे विज्ञानेन विविधान्यद्भूतान्याविष्कृतानि तथापि नास्त्येतासां समाधानं तत्रापि। योगशास्त्रे एव एतासां समाधानं भवितुमर्हति यतोहि अन्तःकरणमालिन्यादेव एताः सर्वाः समस्याः प्रादुर्भवन्ति, एवमेवाद्यतनस्य मानवः न केवलं सुखमभिलषति, तस्मै च प्रयततेऽपि परञ्च नैवं सुखमाप्नोति केवलमटति मृगमरीचिकेव। योगशास्त्रे निरूपितेषु विषयेषु संयमस्यास्त्येको महान् विषयः। वर्तमानस्योत्पद्यमानानां समस्यानां तत्रैव निराकरणम्। तस्मात्कारणात् सम्प्रति योगदर्शने निरूपितस्य संयमस्वरूपविषये विचार्यते। संयमशब्दस्य श्रवणमात्रेण जनाः प्रलपन्ति यदयं विषयो वैराग्यशालिनां कृते, न तु सांसारिकजनानां कृते। गृहस्थाश्रमे प्रविष्टेभ्यो जनेभ्यो नास्ति संयमस्यावश्यकता काऽपि। परञ्च वस्तुतस्तु एतत्सर्वमसत्येव यतोहि ये जनाः सुखमिच्छन्ति तेभ्यः सर्वेभ्यः संयमस्यावश्यकता भवत्येव। आध्यात्मिकजीवनायापेक्षितोऽयं तथा व्यावहारिकजीवनस्य कृतेऽपि। जीवने व्यवहारस्य मधुरता, आचरणस्य निपुणता, विचाराणां सरलता, चित्तस्य निर्मलता संयमेन भवति, अतस्तस्य जीवने महत्यावश्यकता। सर्वेषां दार्शनिकानां मते जीवनस्य परमं लक्ष्यमाध्यात्मिकोन्नतिरेव, परञ्च जिज्ञासा भवति यद्यस्य जीवनस्य व्यावहारिकपक्षं यदि अव्यवस्थिमसन्तुलितञ्चास्ति, शारीरिकमानसिकदौर्बल्यं रुग्णता चापि दृश्यते तदा कथमाध्यात्मिकोन्नतिविषयस्थानम् ? यदि रोगान्मुक्तशरीराय संयमस्यावश्यकता वर्तते तर्हि पारिवारिकः सामाजिकश्च परम्पराणामक्षमायायाति अतस्तत्रापि महत्त्वपूर्णस्थानं विद्यतेऽस्य। शास्त्रोचिताचरणाय समाजोचितव्यवहाराय च संयमस्य महत्यावश्यकता।

**संयमस्य स्वरूपम्** - सम् उपसर्गपूर्वकं यं धातोरप् प्रत्ययान्निष्पन्नो भवति संयमशब्दः यस्यार्थः प्रतिबन्धः, नियन्त्रणं वेति।

## संयमस्य परिभाषा -

- महाभारते भीष्मो वक्ति यत्संयमितवक्ष्यमाणः पुरुषः पृथ्वीरापाग्निवाय्वाकाशबुद्धिरहङ्का-रसम्बद्धानां सप्त धारणाः साधयति।[१]

---

१. महाभारत में योग विद्या। शन्तिपर्व १९५/२०।

- श्रीमद्भगवद्गीतायाः चतुर्थाध्याये संयमस्य विषये उक्तमस्ति यद् संयमाग्निषु श्रोत्रादीनीन्द्रियाणि जुह्वति प्रत्येकस्येन्द्रियस्य संयमो भिन्न भिन्न एव।

**श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति।**

**शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति॥**[२]

- सर्वदर्शनमतानुसारं मनसः एकाग्र्यमेव, योगस्य तिसृणामवस्थानां प्रकटीकरणे यः समर्थः स एव संयमः।

**धारणाध्यानसमाधित्रयमन्तरङ्गसंयमपदवाच्यम्।**[३]

- अभिज्ञानशाकुन्तले संयमस्यार्थो धार्मिकभक्तिस्तपस्साधना-दयाभावः करुणाभावश्च निगदितमस्ति।[४]

- योगदर्शने महर्षिपतञ्जलिना धारणा-ध्यान-समाधिस्त्रयमेकत्र संयमः इत्युक्तम्।

**त्रयमेकत्र संयमः।**[५]

अनेन प्रकारेण योगस्य बहिरङ्गभूतानि साधनानि यम-नियम-आसन-प्राणायाम- प्रत्याहारादीनि सन्ति किन्तु यान्यन्तरङ्गभूतानि तानि धारणा-ध्यान-समाध्यादीनि एव। असम्प्रज्ञा- तसमाधावपि धारणा-ध्यान-समाधि बहिरङ्गभूतानि साधनानि स्वीकृतानि। एतेषां त्रयाणामेक रूपमेव संयमो वर्तते। तस्मात्संयमशब्दस्य ज्ञानात्पूर्वं धारणाध्यानसमाधीनां विषये ज्ञानं परमावश्यकम्।

**धारणाः**- कस्मिन्नपि देशविशेषे चित्तबन्धनमेव धारणोच्यते यथोक्तमपि -

**देशबन्धश्चित्तस्य धारणा।** [६]

- महर्षिव्यासमतानुसारं चित्तस्य नाभिचक्रे, हृदयपुण्डरीके, मूर्ध्निज्योतिषि, नासिकाग्रे, जिह्वाग्रे इत्यादिषु शरीरप्रदेशेषु बाह्यविषयेषु वा वृत्तिमात्रबन्धनं स्थिरीकरणं वा धारणेति।

**नाभिचक्रे, हृदयपुण्डरीके, मूर्ध्निज्योतिषि, नासिकाग्रे, जिह्वाग्रे इत्यादिषु देशेषु *बाह्ये वा विषये चित्तस्य वृत्तिमात्रेण बन्ध इति धारणा।***[७]

- योगवार्तिकानुसारं चित्तस्य सर्वेभ्यो विषयेभ्यः अपसार्य कस्यापि स्थानविशेषे स्थापनमेव धारणाया लक्षणम्।

---

२. श्रीमद्भग. ४/२६ ।
३. सर्व. २/५९ ।
४. अभिज्ञानशाकुन्तलम् । ३/१९ ।
५. यो. सू. ३/४ ।
६. यो. सू. ३/१ ।
७. व्या. भा.,पृ. २७७ ।

**यत्र देशे ध्येयं चिन्तनीयं तत्र ध्यानाधारदेशविषये**
**चित्तस्य स्थापनं तदैकाग्र्यं धारणा।** [८]

अन्येष्वपि ग्रन्थेषु धारणाविषये विस्तृतरूपेण चर्चा वर्तते एव। मण्डलोपनिषदि धारणाया अर्थः प्रत्याहारः स्वीकृतः, येन सर्वेषां विषयाणां व्यावर्त्तनं भवति तादृशी चित्तस्य चैतन्यता धारयितुं या शक्ति सैव धारणेति।

**विषयव्यावर्तनपूर्वकं चैतन्ये चेतः स्थापनं धारणा भवति।**[९]

रघुवंशमहाकाव्ये धारणाशब्दस्यार्थः स्मरणशक्तिः, मनसः शान्तिः, श्वासस्यावरोधनं, मनसः दृढभावमग्नता एव धारणा स्वीकृता ।

**परिचेतुमुपांश धारणा।**[१०]

**ध्यानम्** – ध्यै धातो ल्युट् प्रत्ययान्निष्पन्नोऽयं ध्यानशब्दः। यस्यार्थः मननं, विमर्शः, विचारः, चिन्तनमिति च।

- महर्षिः पतञ्जलिमतानुसारं यस्मिन् वस्तुनि धारणा तिष्ठति तद्वस्तु पूरयितुं साधनं ध्यानमेव।

**तत्र प्रत्यैकतानता ध्यानम्।**[११]

- भाष्यकारेणापि वृत्यान्तसबाधितसदृशप्रवाहमात्रं ध्यानं स्वीकृतम्।

**सदृशः प्रवाहः प्रत्ययान्तरेणापरामृष्टो ध्यानम्।**[१२]

प्राचीनकाले ध्यानशिक्षायाः स्वरूपमपि नैतिकशिक्षायामेव समाहितमासीत्। सा च ध्यानशिक्षा अनिवार्यरूपेण स्वीकरणीया इति नियमेन साधनभूता समावेशिता च कृता। अस्माकं ऋषिपरम्परायामपि ध्यानयुक्ता भवति स्म। अन्येषु ग्रन्थेषु ध्यानस्य स्वरूपमनेन प्रकारेण वर्तते।

- रघुवंशमहाकाव्ये स्वरूपं व्याप्तरूपं परमात्मनः वासुदेवस्य चिन्तनमेव ध्यानम्।

**चिन्तनं वासुदेवस्य परस्य परमात्मनः।**
***स्वरूपव्याप्तरूपस्य ध्यानं कैवल्यसिद्धिम्।।***[१३]

---

८. यो. वा. पृ. १८१ ।
९. मण्डलब्राह्मणोपनिषद्. १/१ ।
१०. रघु. ८/१८ ।
११. यो. सू. ३/२ ।
१२. व्या. भा. पृ. २१९ ।
१३. रघु. १/७३ ।

- अभिज्ञानशाकुन्तलेऽन्तर्ज्ञानमन्तर्विवेको वा कस्यापि देवस्याल्पोपाधिभूतं स्वस्य चिन्तनमेव ध्यानम्।

**तदैव ध्यानादवगतोस्मि।** [१४]

**समाधिः**– समाधिशब्दः समुपसर्गात् 'धा' धातो 'कि' प्रत्ययो भूत्वा निष्पद्यते। यस्यार्थः एकत्रीकरणं, स्वस्थीभवनं, मनसः एकतानमिति। ध्यानस्य परं गतिर्नाम समाधिः।

- महर्षिपतञ्जलिमतानुसारं निरन्तरमभ्यासेन पूर्वोक्तं ध्यानं यदा ध्येयमात्रस्य प्रकाशकं स्वध्यानाकारेण सादृश्यभिन्नं भवति तदा समाधिरुच्यते।

**तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः।** [१५]

- विज्ञानभिक्षुमतानुसारं समाधिः चित्तस्थैर्यस्य सर्वोत्कृष्टावस्था भवति, अतएव समाधि विशिष्टचित्तं ध्येयविषये एतादृशमनुरञ्जितं तिष्ठति सत्तस्य 'अहं जानामि' इत्यकारस्य ज्ञानं नैव भवति।

**चित्तस्य ध्येयस्वरूपावेशेनाहमिदं**
**चिन्तयामीत्येवं प्रत्ययाकारवृत्त्यन्तरानुदयात्।**[१६]

परञ्चास्याभिप्रायोऽयं नास्ति यत् तत्र ज्ञानस्य स्थितिर्नैव विद्यते अर्थाद् ज्ञाने सत्यपि तस्य प्रतीतिर्न भवति। अन्यथा ध्येयपदार्थो निर्भासितो न स्यात्। यतोहि ध्येयस्य प्रकाशकज्ञानमेव तत्र तिष्ठति। अत एव सूत्रकारेण समाधिलक्षणसूत्रे 'इव' पदस्य प्रयोगेण समाधौ ज्ञानस्य शून्यावस्था निर्दिष्टा न परमार्थिकतया शून्यमिति।

- हठयोगप्रदीपिकायां समाधिर्विषये उक्तं यत् समाधिस्थाः योगिनः मृत्युर्न विद्यते नैव च तस्य कर्मबन्धनम्। केनापि साधारणजनेन तस्य सुखदुःखयोरनुभूतिं नैव कारयितुं शक्यते यतोहि स तु समाधिस्थो जातः

**खाद्यते पञ्च कालेन बाद्यते न च कर्मणा।**
**साध्यते न स केनापि योगी युक्तः समाधिना।।** [१७]

- मण्डलब्राह्मणोपनिषदि समाधेरर्थः ध्यानस्य अविस्मरणं समाधिरित्युक्तम्।

**ध्यानाविस्मृतिः समाधिः।** [१८]

१४. शकु. १/७ ।
१५. यो. सू. ३/३ ।
१६. यो.वा.पृ. २८४ ।
१७. ह. प्र. ४/१०८ ।
१८. मण्डलब्राह्मणोपनिषद १/१ ।

समाधिः द्विधा सम्प्रज्ञातासम्प्रज्ञातभेदात्। एवं च धारणाध्यानसमाधीनां कस्मिन्नपि एकस्मिन् ध्येयविषये एकत्रीकरणस्य नाम संयमः। नित्यतपश्चर्यमाणो जनाः यदा संयमस्योपरि विजयमाप्नोति, अर्थात् चित्ते एतादृशी अवस्था तिष्ठति यस्मिन् विषये सः विचारयति तस्मिन् एव संयमो भवति तस्मिन्नवस्थायां बुद्धयाः प्रकाशो भवति, अर्थाद् अलौकिकशक्तिः समायाति यया योगीजनः सर्वासां सिद्धीनामधिष्ठाता इवाचरति। यथा (१)जनः यदपि कर्म करोति मनबुद्धीन्द्रियैः यत्किमपि अनुभवति तत्सर्वं तस्यान्तःकरणे संस्काररूपेण तिष्ठति, संस्कारेषु संयमेन प्रत्यक्षीभूता योगीजनः पूर्वजन्यस्य ज्ञानमाप्नोति।[१९] (२)संयमेन स्वचित्तस्य साक्षात्कारकृते सति योगी सङ्कल्पमात्रेण परस्य चित्तं जानाति यत् किं चिन्तयति, प्रक्षिप्तोऽयं, मूढ प्रशान्तो वा।[२०] (३)यदा योगीजनः स्वशरीरे संयमम् उपस्थापयति तदा सोऽन्यस्य दृष्टशक्तिनां सङ्कल्पमात्रेणावरोधयति तस्मात्परं चान्यस्य दृष्टेः प्रकाशनशक्त्या सह तस्य सम्बन्धो नैव भवति एतस्मात्कारणान्नैव कोऽपि तं द्रष्टुमर्हति। एवमेव यदि योगी संयमे तिष्ठति तदा नैव कोऽपि तस्य शब्दश्रवणमात्रमपि करोति। यदि शरीरस्य स्पर्शे संयमो भवति तदा न तं स्प्रष्टुं समर्थः कश्चित्।[२१] (४)प्रारब्धकर्म तीव्रवेगेन फलदायकम्, तत् च सोपक्रममित्युच्यते। मन्दवेगेन फलप्राप्तिरुपायः निरूपक्रमेति। अनयोः प्रारब्धकर्मयोः संयमात् ज्ञानं भवति मृत्योः।[२२] (५)मैत्र्याः संयमकारणात् मैत्रीजन्यबलस्योपलब्धिर्भवति।[२३] भावना तिस्रो मैत्रीकरुणामुदिताः। एताभ्यः सुखीजनेषु मैत्री भावनायां जाते सति मैत्रीजन्यबलमाप्नोति। करुणायां संयमेन दुःखार्तानां दुःखत्रातुं शक्तिरागच्छति। मुदितया मानवस्यस्वार्थयुक्तादृष्टिर्भवति। (६) ज्योतिष्मतिप्रवृतौ संयमात्सूक्ष्मव्यवहितविप्रकृष्टयुक्तानां पदार्थानां ज्ञानमाप्नोति।[२४] प्रवृतेरस्य कारणाद् यदा कस्यापि सूक्ष्मतत्त्वस्य योगिना चिन्तनं विधीयते तदा अदृष्टस्य परमाणोः भूमौ व्यवहितस्य पदार्थस्य, शरीरान्तराणि, विप्रकृष्टानि वस्तुनि, अगोचरकृतानि साधनानि च सहजतयावभासते। (९)नक्षत्रमण्डलस्योपरि विद्यमाने ध्रुवलोके ताराणां गतिर्ज्ञानमवाप्नोति।[२५] यतोहि ध्रुवलोकमेव तेषां मूलम् अतएव ध्रुवलोकस्य साक्षात्कारेण तारागणानां गत्यपि साक्षात्कारो जायते। (१०)शिरसि कपोले विद्यमानस्य प्रकाशयुक्तस्य छेदस्य संयमात् पृथ्वीखवर्गयो गम्यमानानां सिद्धपुरुषाणां दर्शनं भवति।[२६] (११)ब्रह्मपुरस्थ हृदयदेशे अकारस्य गर्तस्य स्थाने चित्तस्य स्थानम्, तत्र संयमात् सवृत्तचित्तस्य ज्ञानमाप्नोति पुरुषः।[२७] (१२)श्रोत्राकाशयोः सम्बन्धो यदा योगीजनः संयमेन स्थापयति प्रत्यक्षेण, तदा श्रोत्रादिष्विन्द्रियादिषु दिव्यशक्तिरागच्छति।[२८] स तदा सूक्ष्मातिसूक्ष्मः शब्दोऽपि, आवर्त्येण शब्दस्यापि दूरस्थोच्चार्यमाणस्यापि श्रृणोति।

१९. संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम्। यो.सू. ३/१९ ।
२०. प्रत्ययस्य परचित्तज्ञानम्। यो.सू. ३/२० ।
२१. कायरूपसंयमात् तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशासम्प्रयोगेऽन्तर्धानम्। यो.सू. ३/२१
२२. सोपक्रमं निरूपक्रमं च कर्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वा। यो.सू. ३/२२
२३. मैत्र्यादिषु बलानि। यो.सू. ३/२३
२४. प्रवृत्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम्। यो.सू. ३/२५
२५. ध्रुवे तद्गतिज्ञानम्। यो.सू. ३/२७
२६. मूर्धज्योतिषि सिद्धदर्शनम्। यो.सू. ३/३२
२७. हृदय चित्तसंवित्। यो.सू. ३/३४।
२८. श्रोत्रकाशयोः सम्बन्धासंयमाद् दिव्यं श्रोत्रम्। यो. सू. ३/४१

एवं संयमेन अनेकाः सिद्धयः प्राप्तुं शक्यन्ते, प्राचीनकालाद् वर्तमानकालयावत् संयमेन एव मानवो सर्वेषु क्षेत्रेषु विजयमाप्नोति। परञ्चाधुनिककाले मानवस्य स्वजीवनसम्बद्धक्रियाकलापेषु यादृशी व्यस्तता वर्तते तेन तस्य संयमस्य स्थितिः कुत्रापि न दृश्यते। अद्यतनीय मानवः स्वविवेकेन केवलमिच्छापूरणाय प्रयतते। कस्मिन्नपि कर्मणि औत्सुक्यभावेन सत्यपिरते संयमस्यावस्था प्रायशो विलुप्तैव। चित्ते बहूनि विकाराणि समागते तत्र संयमस्याभावोऽवलोक्यते। कारणानि सन्ति बहूनि मानवस्य विकासमार्गमवरोद्धं, तथापि संयमस्याभावोऽपि तत्र प्रमुखकारणत्वेन सम्प्रत्यवलोक्यते। समये समये देशस्य महानुभावैः संयमस्य शिक्षा लोककल्याणाय स्वविचारैः प्रकटिता। देशं स्वतन्त्रकारयितुं यथा राष्ट्रपिता महात्मागांधिना संयमसम्बद्धं चरित्रं स्वविचारश्च प्रस्तुतः

**''अहिंसा के विचार को प्रकट करते हुए उन्होने अपनी आत्मकथा में लिखा है- 'मनुष्य क्षण भर भी बाह्य हिंसा के बिना नही रह सकता। खाते-पीते, उठते-बैठते, सब कर्मो मे इच्छा या अनिच्छा से कुछ न कुछ हिंसा तो वह करता ही रहता है। उस हिंसा से निकलने का महाप्रयास हो, उसकी भावना में अनुकंपा हो, वह छोटे से छोटे प्राणी का भी नाश न चाहे, यथाशक्ति उसे बचाने की कोशिश करे तो वह अहिंसा का पुजारी है, इससे उसकी प्रवृति में निरंतर संयम की वृद्धि होगी। उसमें निरन्तर करुणा बढ़ती जाएगी। उन्होंने करुणा और संयम को व्यक्तिगत गुणों के बजाए सार्वजनिक मूल्य बनाने की कोशिश की। वह भी साधुओं-संन्यासिओं, पीरो-फकीरों के लिए नही, आम लोगो के लिए।''**[२९]

तथैव रामजन्मभूमिविवादस्य निर्णयकाले डा. मनमोहन सिंहेन श्रीमती सोनियागांधिना च जनतायै स्वभाषणमाध्यमेन संयमस्यावश्यकता विषये विचाराः प्रस्तुताः -

**''प्रधानमंत्री मनमोहन सिंह व कांग्रेस अध्यक्ष सोनिया गांधी ने अयोध्या विवाद पर आने वाले इलाहाबाद हाईकोर्ट के फैसले के मद्देनजर देशवासियों से आपसी भाईचारा व संयम बनाए रखने की अपील करते हुए कहा ''भारत के सभी वर्गो के लिए इस फैसले के बाद धैर्य और शान्ति कायम रखना जरुरी है।'''**[३०]

एवं संयमस्य महत्त्वं न केवलं सामाजिककल्याणाय अपितु स्वोन्नतयै बाबा रामदेवसदृशाः महानुभावाः नित्यं शिक्षयन्ति। येषां प्रभावेण जनाः तम्प्रति आकृष्टं भूत्वा संयमस्य वास्तविकस्वरूपं ज्ञातुं प्रयत्नशीलाः दृश्यन्ते।

**संयमस्य प्रकाराः -**

(१) संयमास्यादिमोबिन्दुराहारे संयमो वर्तते। यस्मादृते जीवनस्याशासम्भवैव तथापि केचन जनाः एव एतादृशा दृश्यन्ते ये स्वात्मनि भोजनस्य विषये संयममुपस्थापयन्ति। भोजनस्य संयमस्यार्थः

२९. अहिंसा माने करुणा और संयम। हस्तक्षेप, राष्ट्रीय सहारा २ अक्टूबर २०१०

३०. मनमोहन, सोनिया ने की संयम रखने की अपील, राष्ट्रीय सहारा ३० सितम्बर २०१०

समयानुसारेणोचितं सात्त्विकं सुपाच्यं भोजनग्रहणम्। यदा बुभुक्षा जायते तदेव भोजनं कर्त्तव्यम्। यो जनो भोजनेऽसंयमी भवति सैव जनो रोगग्रस्तो भवति यस्मात्कारणाद् दु:खं प्रकृतितिरागच्छति।

(२) वाचि संयमो द्वितीयो प्रकारो वर्तते वाणी, सा मानवस्य कृते प्रकृतिप्रदत्तमनुपम वरदानस्वरूपा। जगत्यखिले मानवस्य एव एतादृशो यस्याधीने साधनमिदमुपलब्धम्। केचन एव अस्या: सदुपयोगिन: सन्ति। सामान्यतो जना अस्या दुरूपयोगेन दु:खमनुभवन्ति परं पीडयन्ति ताडयन्ति च। मिथ्याश्लीलकटुनिन्दात्मकेषु वाक्येषु मतिं न प्रेरय, सत्यप्रियविनम्रवाक्येषु बुद्धिस्थापनमेव वाक्संयमो भवति। स्वार्थोत्तेजनापक्षपातादीनां भावनानां तिरस्कारेणैवायं संयम आगच्छति।

(३) संयमस्य तृतीयप्रकार: स्वार्थे संयमो भवति, मानव:प्रकृत्यैव स्वार्थभूतप्राणी। सर्वदैव एवमिच्छति यत् सर्वाणि वस्तूनि स प्रथमतयाधिक्येन च लभेत्। एतादृश्या भावनया कलहद्वेषदु:खासन्तोषादीनामुत्पत्तिर्भवति। परस्परं समतासौख्यसहृदयमाधुर्याणामविष्करणेन स्वार्थस्योपरि संयमो जायते।

(४) कामनासु संयमो भवति चतुर्थप्रकार:। धर्माचार्याणां कथनमिदं वर्तते यन्मानवस्य मन: कामनानामालयो यत्र एकस्मिन् जन्मनि नैवापितु सहस्रेषु जन्मेषु अपि पूरयितुमसमर्थ एव। एतादृश्यामवस्थामात्मन इच्छापूरणमज्ञानात्परं किमपि नैव। सर्वेषां दुखानां कारणमात्रं केवलेच्छा एव। तस्मात् कामनासु नियन्त्रणमावश्यकं यदभ्यासेनायाष्यति अतस्तत्र यतनीयम्।

(५) संयमस्य पञ्चम: प्रकार कामसंयम:। सत्यमिदं यद् विना परिश्रमेण किमपि न सिध्यति तथापि स्वशक्त्यानुसारेण योग्यतासमयानुरूपेण च पुरुषार्थ: कर्त्तव्य:। जीवने धनस्यापि महत्त्वं वर्तते परञ्च तस्मादन्यावश्यकं व्यवहारज्ञानस्यापेक्षा भवति। अत: श्रमविश्रमयोर्मध्ये सन्तुलनमावश्यकम्।

(६) व्यवहार: संयमस्य षष्ठप्रकार:। जीवने व्यवहारज्ञानस्यावश्यकता प्रत्येकस्मिन् पदे भवत्येव। सर्वै: सह व्यवहारे माधुर्य स्यात्। सर्वेषामभिरुचिसंस्कारस्वभावानां योग्यता पृथक्-पृथक् भवति। अस्यां स्थितौ प्रेमसमतासहिष्णुताक्षमायुक्तो व्यवहारस्यापेक्षा सर्वे इच्छन्ति। मनस्स्वभावो यत्रानुकूल्यं भजते तत्रैव रागाद् भवति प्रतिकूलतायां च द्वेषो जायते। तस्माद्रागद्वेषयोर्भावना परित्याज्या।

(७) मैत्री संयमो भवति सप्तम: प्रकार:। संसारे सर्वेषामेतादृशं मित्रं तिष्ठत्येव येन सह स: चिन्तयति। मैत्रीसम्बन्धे स्वार्थपरायणता मा भवेत्। विचिन्त्येव मैत्रीकरणमुत्तमं तादृशी मैत्रीदीर्घकालिको भवति। तुल्यविचारसंस्कारस्थितिरुच्याधारेण मैत्री स्थायितामधिगच्छति। विपत्तौ संरक्षणं सन्मैत्रीलक्षणम्।

**उपसंहार:** - तत्त्वदर्शिणामभिमतमस्ति यत् संयमाद् ऋते जीवनस्य कोऽपि पक्ष: सन्तुलितो नैव भवितुमर्हति न च सुदृढत्वं स्थायीत्वमिति। सर्वेषु क्षेत्रेषु संयम: सुखीजीवनस्याधारो वर्तते। वर्तमानस्य जीवने प्रत्येकस्मिन् क्षेत्रे नाना समस्यास्सन्ति ता: समाधातुं च मनुष्योऽसमर्थ:। एतस्य मुख्यकारणं विद्यते संयमस्याभाव:। यदि मानव: आहारविहारयो:, सञ्चयव्यययो: संयम: स्थापयेत्तदा स्वयमेव एतासां समस्यानां निराकरणं भवितुं शक्यते। तस्य जीवनं च सुखेन गच्छेत्। विदुषां

कथनमस्ति यच्छाश्वत्सुखानां माध्यमेन संयमस्य प्राप्तिर्भवति, पदार्थानां सङ्ग्रहो, विषयभोगश्च परन्तु एतादृशी आशा व्यर्थैव। एत्सर्व दृष्टुममृततुल्यं प्रतीयते परञ्च परिणामे कष्टकरमेव। शास्त्रेषु विषयानन्दः विषयस्य मूलभूतनिदानम् इति गदन्ति। विषयानन्दो विषकुंभे पयो मुखमिव मानवस्यासमयैव मृत्युपथानुगामी भवति। संयमः एव सुखीजीवनस्याधारेति ब्रूवन् भणति सन्तकबीरदासः -

**''संतो संतोष सुख हैं, रहहु हृदय जुडाय।**
**जब लग दिल पर दिल नहीं, तब लग सुख नाहीं।।**

**जो तु चाहै मूझको, छाड सकल की आस।**
**मुझ ही ऐसा होय रहो, सब सुख तेरे पास।।''**

अर्थात् वास्तविकसुखं तु सन्तोषमेव। यदि सन्तुष्टास्तदा कामनासु जाज्वल्यमाणं शरीरमिदं शीतलतामवाप्नोति। यावन्मनः संयतमितं न तावद् वास्तविकसुखम्, तस्मान्मनसः विजयं कुरु। यदि मादृशा भवितुमर्हन्ति सुखी शान्तश्च, तदा सर्वाशां परित्यज्य मादृशेव निष्कामो भव। तदा सर्वं सुखं स्वयमेवायाति। संयमसन्तोषनिष्कामतासु परं श्रेष्ठं नित्यसुखं सदा तिष्ठति।

## सन्दर्भग्रन्थसूची

१. द्वारकाप्रसाद, *योग एक वरदान,* सुबोध पब्लिकेशन्स, नई दिल्ली, प्रथम संस्करण-२०००।

२. आचार्य, श्रीरामशर्मा, *योग दर्शन,* वेदमाता गायत्री ट्रस्ट, वेद विभाग, शान्तिकुञ्ज, हरिद्वार, प्रथम आवृत्ति-२०००।

३. श्रीवास्तव, सुरेशचन्द्र, *पातञ्जलयोगदर्शन,* चौखम्बा सुरभारती प्रकाशन, वाराणसी-२००२।

४. त्रिखा, राजकुमारी, *महाभारत मे योग विद्या,* जे.पी. पब्लिशिंगहाउस, दिल्ली, प्रथम संस्करण-२००३ ।

५. आयंगर, बी.के.एस, *सभी के लिए योग,* प्रभात प्रकाशन, दिल्ली, प्रथम संस्करण-२००५।

६. आचार्य बालकृष्ण, *योग संदेश,* २५७ दरीबा कला, दिल्ली, सितम्बर-२००९।

# बृहत्पाराशरहोराशास्त्रे विविधराजयोगादिनिरूपणम्

**डॉ. परमानन्दभारद्वाजः**

## विषयावतरणम्

राजयोगादिवर्णनविषये बृहत्पाराशरहोराशास्त्रे सप्तसु अध्यायेषु समीक्षापुरःसरं वर्णनं विहितम्। अत्र विविधानां राजयोगानां धनिकदरिद्रबन्धनसुखादिकयोगानां विवेचनं कृतमस्ति। विविधयोगज्ञाने द्वादश-राशिचक्रमधिकृत्य सूर्यादिग्रहाणां पापपुण्यकारकमारकज्ञानस्यावश्यकत्वादस्माच्च तस्याध्यायस्यात्रैव सन्निवेशः। एकविंशतितमो अध्यायो नाभसयोगफलाध्यायः। अत्र नाभसयोगानां विशदवर्णनम्। एते योगाः फलितशास्त्रे प्राचीनतमाः सन्ति। यत्र ग्रहाणामाश्रयदलाकृतियोगेन योगानां वर्णनं विद्यते। २२ अध्यायो बहुयोगफलाध्यायः यत्र सुप्रसिद्धानां गजकेसरिप्रभृतिकानां राजयोगादिकफलप्रतिपादकानां योगानां वर्णनं दृश्यते। ३३ तमोऽध्यायो जीवानां सुखदुःखनिरूपणाध्यायः। अत्र चाद्भुतप्रकारेण जीवानां सुखदुःखज्ञानविधिः प्रकीर्णरूपेण दृश्यते यत्र ग्रहाणां कारकज्ञानपुरःसरं विवाहकालज्ञानपुत्रकन्याविचारस्य भ्रातृभगिनीविचारादिकस्य, मृत्युकालजलप्रसवपुष्कललाभादिकज्ञानप्रकारस्य, ऋणस्य, ऋणमुक्तस्य वा ज्ञानस्य पीडासौख्यशीतलरोगकर्मोदयव्ययज्ञानस्य च प्रकीर्णात्मकं वर्णनमुपलभ्यते। अयमध्यायः लोमशसुजन्मसम्वादप्रकरणरूपेणाङ्कितः। महर्षिलोमशस्यात्रैव सकलग्रन्थे नाम निर्देश इति विशेषोऽपि ज्ञेयः। वर्णनप्रकारश्चाद्भुतः।

## राजयोगादिज्ञानप्रकारः[१] –

महर्षिपराशरेण ग्रहाणां राशिभावादीनाञ्च योगेन व्यक्तिविशेषस्य कृते न केवलं राजयोगशब्देन महैश्वर्यादिप्राप्तिवर्णनं विहितमपितु मूकबधिरपङ्गुविकलाङ्गान्धदीनरोगाक्रान्तयोगादिकथनपुरःसरमनेकानां दरिद्रयोगानामपि विशदं निरूपणमङ्कितम्। निरूपणप्रकारश्चात्राद्भुतः।

इदमेव तत्त्वमत्रफलकथने। ग्रहाणां योगायोगेनैव पुरुषादिकस्य भाविफलविचारोऽत्रोपलभ्यते। तैस्तैर्योगायोगैरयं पुरुषो इयं स्त्री वा कस्मिन् समये भाग्योदयमुपयास्यति। शरीरसौख्यं पूर्णं न वेति। विकलाङ्गोऽन्धो दीनो वायम्। मूकत्वं बधिरत्वञ्च कीदृशं पूर्णमपूर्णं वेति। अयं राजा दरिद्रो वा

---

१. बृ. पा. पू. भा. २१, २२, २८, २९, ३०, ३१ अध्याय (मुम्बई-सं.)

पण्डितो मूर्खो वा दुर्बलः सबलो वेति विविधप्रकारेण निरूपणमत्र दृश्यते।

एभिर्योगैरेव मातृपितृपुत्रजायाभृत्यादिकानां सुखमपि निर्दिष्टम्। कदा चेषां सम्बन्धिनां मृत्युयोगः सोऽपि योगैरेव प्रदर्शितः।

कीदृशी चास्याजीविकेत्यपि ग्रहयोगमधिकृत्य अधिगन्तुं शक्यते। अतश्च विलक्षणोऽयं ग्रहयोगविज्ञानप्रकारः।

अयं प्रकार एवास्य ज्योतिर्विज्ञानस्य मूलम्। अत्रैव सर्वैर्होराशास्त्रविचक्षणैरनुसन्धानं विहितम्। अयं प्रकारो न केवलं भारतीयैरेवाङ्गीकृतः अपितु पाश्चात्यैरपि दैवज्ञैः स्वीकृतः। यावनीयैर्यावनीभाषायामिक्कबालयोगादीनां विविधप्रकारेण पल्लवनं विहितम्। आङ्गलभाषाविज्ञैः यूरोपदेशीयैरपि ज्योतिर्विद्भिः कम्बिनेशनशब्देन विविधयोगानुरूपं फलनिर्देशनं विहितम्।

अत्र राजयोगवर्णने नाभसयोगाः विशेषप्रकारेण न कथिताः सन्ति। नाभसशब्दस्य नभस अयं नाभस इति व्युत्पत्तिर्दृश्यते। तेन नाभसशब्दस्य दिव्यत्वमनुमीयते। नाभस योगाः दिव्ययोगा इति भावः। पूर्वजन्मशुभपुण्यफलभोगानुसारमत्र मानवजन्मनि चैषु नाभसयोगेषु दिव्यशक्तिप्रसादेन जन्मप्राप्तिर्विद्यते। अत्र एते विशेषशुभफलप्राप्तिप्रदाः ग्रहयोगाः नाभसयोगशब्देनाङ्गीकृताः सन्ति।

एषां योगानां विज्ञाने निम्नाङ्कितानां प्रकारैः ज्ञानमावश्यकम्। तेनैव योगानां बलाबलत्वं विज्ञायते–

(क) ग्रहयोगोऽनेकग्रहयोगेनैव भवति न **चैकेन** ग्रहेणेति।

(ख) ग्रहाणां शुभाशुभत्वमपि प्रकारद्वयेन ज्ञायते। स्वाभाविकं शुभत्वमशुभत्वञ्च। भावराशिग्रहयोगानुरूपप्राकृतिकं शुभत्वमशुभत्वं वा।

(ग) समत्वमर्थान्नशुभत्वन्नाशुभत्वमत्र तृतीयो भेदोऽपि स्वतोऽङ्गीक्रियते।

१. प्रथमस्य लक्षणम् गुरुशुक्रौ, शुभग्रहसंयुतो बुधः, क्षीणरहितचन्द्रमा च स्वाभाविकाः शुभग्रहाः इति।

२. द्वितीयस्य स्वरूपम् त्रिकोण (लग्नपञ्चमनवमभावाः) नेतारः शुभाः।

केन्द्रपतयश्च स्वाभाविकाः शुभास्त्रिषडायेशाश्च सर्वे ग्रहा अशुभा एव भवन्ति। उक्तं यथा–

**सर्वे त्रिकोणनेतारो ग्रहाः शुभफलप्रदाः।**
**पतयस्त्रिषडायानां यदि पापफलप्रदाः॥**

**३. तृतीयस्य स्वरूपम्–**

द्वितीयद्वादश भावाधिपौ समौ अर्थात् योगानुरूपं शुभाशुभत्वं प्रयच्छतः। "लग्नाद्वयद्वितीयेशौ परेषां साहचर्यतः" अष्टमभावाधिपतिरपि मध्यमः।

> **भाग्यव्ययाधिपत्येन रन्ध्रेशो न शुभप्रदः।**
> **स एव शुभसंधाता लग्नाधीशोऽपि चेत्स्वयम्॥**

राशिभावनिरूपणपुरःसरमेषां ग्रहाणां निम्नप्रकारेण महर्षिणा पृथक्त्वेन शुभाशुभत्वं निरूपितं फलप्रदर्शने योगज्ञाने चास्य ज्ञानं सुतरामनिवार्यम्। तत्र द्वादशलग्नानुसारेण कारकमारकादिनिर्णयः।

**मेषलग्नम्–**[२]

मेषलग्ने भौमोऽष्टमेशोऽष्टमेशोऽपि नाशुभप्रदः लग्नेशत्वात्। रविगुरू शुभौ। अत्र विशेषः गुरुशनियोगे (गुरुस्त्रिकोणाधिपतिः शनिश्च केन्द्राधिपतिः परञ्च शनेरैकादशेंत्वान्न शुभत्वमिति भावः)।

न योगकारकत्वमस्तीति। शनिबुधशुक्राः पापाः ज्ञेयाः। शुक्रस्य द्वितीयसप्तमाधिपतित्वान्मारकत्वम्। शुक्रेण सह सम्बन्धत्वे शनिबुधौ अपि मारकौ भवितुमर्हतः। अन्येषु लग्नेषु ग्रहाणां कारकमारकादिस्थितिः कथं ज्ञातव्येति प्रस्तूयतेऽत्र यन्त्रमाध्यमेन–

**वृषलग्नम्–**

गुरुशुक्रचन्द्राः पापाः, शनिसूर्यौ शुभौ बुधोऽल्पशुभप्रदः, गुरुशुक्रचन्द्रभौमाः मारकाः सन्ति। शनेरत्र राजयोगकारकत्वं विद्यते।

**मिथुनलग्नम्–**

भौमगुरुसूर्याः पापाः, शुक्रः शुभः। शनिर्भाग्येशोऽपि गुरुणा सह न पूर्णयोगफलप्रदः (शनेरष्टमेशत्वम्, गुरौ केन्द्राधिपतित्वमित्यनयोर्योगयोः न पूर्णशुभप्रद इति भावः) चन्द्रस्य मुख्यमारकत्वम्।

**कर्कलग्नम्–**

शुक्रबुधौ पापौ, गुरुचन्द्रभौमाः शुभाः भौमश्चात्र मुख्ययोगकारकः, शनिश्च मुख्यमारकः, सूर्यश्च साहचर्याच्छुभाशुभफलं विधत्ते।

**सिंहलग्नम्–**

बुधशुक्रशनयः पापाः भौमगुरुसूर्याः शुभाः (अत्रापि गुरोः पंचमेशत्वात्तथा शुक्रस्य दशमेशत्वान्न

२. बृ. पा. पू. भा. १३ अध्यायः सकलः (मुम्बई-सं.)

द्वयोर्योगः शुभप्रदः। शुक्रस्य तृतीयेशत्वात्तथा गुरोरष्टमेशत्वादिति भावः) शनिश्च मारकः, चन्द्रश्च साहचर्याच्छुभाशुभन्तनोति।

**कन्यालग्नम्–**

भौमगुरुचन्द्राः पापाः, बुधशनिशुक्राः योगकारकाः (शुक्रस्य नवमेशत्वात्) द्वितीयेशत्वाच्छुक्रस्य मारकत्वमपि निर्दिष्टम्। सूर्यश्च साहचर्यात्फलप्रदः।

**तुलालग्नम्–**

गुरुरविभौमाः पापाः, शनिबुधौ शुभौ, चन्द्रबुधौ योगकारकौ गुरुभौमौ मारकौ स्तः।

**वृश्चिकलग्नम्–**

शनिशुक्रबुधाः पापाः, गुरुचन्द्रौ शुभौ, रविचन्द्रौ योगकारकौ, भौमश्च समः, शुक्राद्याः पापाः मारकाश्च सन्ति।

**धनुर्लग्नम्–**

शुक्रश्चाशुभः, रविभौमौ शुभौ, रविबुधौ योगकारकौ शनिश्च मारकः, शुक्रस्यापि पापत्वान्मारकत्वमुपपन्नम्।

**मकरलग्नम्–**

भौमगुरुचन्द्राः पापाः, शुक्रबुधौ शुभौ, शनिर्द्वितीयेशोऽपि लग्नेशत्वान्न स्वयं मारकः, भौमाद्याः पापा एवात्र मारकाः सन्ति।

**कुम्भलग्नम्–**

गुरुचन्द्रभौमाः पापाः, शनिशुक्रौ शुभौ, चात्रैकः शुक्र एव राजयोगकारकः, गुरुरविभौमाः मारकाः बुधश्च सम इत्यूह्यम्।

**मीनलग्नम्–**

शनिशुक्ररविबुधाः पापाः, भौमचन्द्रौ शुभौ, गुरुभौमौ योगकारकौ।

भौमस्य द्वितीयेशत्वादपि न स्वतो मारकत्वन्नवमेशत्वादिति भावः। शनिबुधौ केवलं मारकौ भवतः।

ग्रहाणां योगज्ञाने सम्बन्धचतुष्टयस्याप्यत्र ज्ञानमपेक्षितमेव।

(१) अन्योऽन्यराशिसम्बन्धः।

(२) परस्परदृष्टिसम्बन्धः।

(३) अन्यतरदृष्टिसम्बन्धः।

(४) सहावस्थानसम्बन्धः।

(१) तत्र प्रथमे भावैकस्य स्वामिन अन्यभावे स्थितिस्तथान्यभावस्य स्वामिनः पूर्वस्मिन्। यथा कर्काधिपश्चन्द्रः सिंहे, सिहाधिपः सूर्यः कर्के इति भावः।

(२) परस्परं पूर्णदृष्ट्या वान्यतरदृष्ट्या ग्रहद्वयस्यावलोकनं द्वितीयसम्बन्धः यथा मेषस्थः सूर्यः सप्तमस्थं भौमं पश्यति भौमश्च सूर्यमित्यभिप्रायः।

(३) एकस्य ग्रहस्यान्यस्य ग्रहस्योपरि दृष्टिः स्यात्पूर्वस्य तु न भवेदिति तृतीयसम्बन्धः यथा लग्नस्थो शनिस्तृतीयस्थं सूर्यं पूर्णं पश्यति परं सूर्यस्य दृष्ट्यभाव इति।

(४) एकत्रानेकग्रहावस्थानम्। यथा शनिशुक्रौ लग्नस्थौ रविचन्द्रभौमाः दशमस्था इत्यादि। तत्रापि निम्नाङ्कितविवरणानुसारमपि सुविचारणीयमावश्यकम्।

अत्र पक्षद्वयं शुभाशुभरूपम्

**शुभपक्षः–**

१. (क) यदि योगकारकाः शुभग्रहः,

(ख) योगकारकस्य शुभग्रहेण सहावस्थानम्,

(ग) योगकारकोपरि शुभग्रहदृष्टिः,

(घ) योगकारकस्योच्चत्वमथवा मित्रगृहावस्थानम्।

**अशुभपक्षः–**

२. (क) यदि योगकारकोऽशुभग्रहः।

(ख) योगकारकस्याशुभग्रहेण सह संयोगः।

(ग) योगकारकस्योपर्यशुभग्रहस्य दृष्टिः।

(घ) योगकारकस्य नीचत्वमथवा शत्रुगृहेऽवस्थानम्।

उपरितनैरेभिर्योगैरपि ग्रहयोगानां बलाबलत्वं भवतीति भावः।

षड्बलरश्मिबलानामपि विचारो विधेयस्ततश्च राजयोगादीनां बलाबलत्वनिरीक्षणपुरःसरं यः फलादेशः कथ्यते स बलीयान् भवतीति स्पष्टम्।

**नाभसयोगः–**

अत्र पूर्वं नाभसयोगानामेव विचारो विधीयते। एतेषां सङ्ख्याष्टादशशतमस्ति। तत्र मुख्या द्वात्रिंशत्संख्यकाः सन्ति। एतेषु त्रय आश्रययोगाः, द्वौ दलयोगौ विंशतिसङ्ख्यका आकृतियोगाः सप्तसङ्ख्यकाः योगा उपलभ्यन्ते। अनेनैषां चतुर्विधत्वं सुस्पष्टम्। एषां नाभसयोगानां सर्वत्रनारदपुराणे[३] बृहज्जातके[४] सारावल्यां[५] जातकपारिजाते[६] रणवीरज्योतिर्महानिबन्धादिषु[७] ग्रन्थेषु वर्णनमुपलभ्यते।

नाभसयोगानां द्वात्रिंशद्भेदा एव नारदादिपुराणेषूपलभ्यन्ते एषामेव योगानां यवनैरष्टादशशतभेदाः पल्लविता इति वराहमिहिरेण कल्याणवर्मणा च निर्दिष्टम्। तथा हि बृहज्जातके–

**यवनैस्त्रिगुणा हि षट्शती सा कथिता।**[८]
सारावल्यामपि–**यवनाद्यैर्विस्तरतः कथिताः योगास्तु नाभसनाम्ना।**

यथोक्तं बृहत्पाराशरे–

**अधुना नाभसा योगाः कथ्यन्ते द्विजसत्तम।**
**द्वात्रिंशत् प्रभेदास्तु शतघ्नाष्टादशोन्मिताः॥**

तत्रादौ रज्जुमूसलनलनाम्नस्त्रय आश्रययोगाः निरूप्यन्ते।

(१) यदि सर्वे ग्रहाश्चरराशिषु (मेषकर्कतुलामकरेषु)

भवेयुस्तदा रज्जुनामायं योगः।

अस्य न शुभफलम्। अस्मिन् योगे समुत्पन्नो नरः प्रवासी पर्यटनपरः क्रूरः खलश्च भवति।

(२) यदि सर्वे ग्रहाः स्थिरराशिषु (वृषसिंहवृश्चिककुम्भेषु)

---

३. नारदमहापुराणम्, १/२/५५/१८६–१६६, 'कल्याणं संक्षिप्तनारदपुराणांकम्' ख्रिष्टाब्दा जनवरी १९५४, गीता प्रेस, गोरखपुरम्।
४. सीताराम झा 'बृहज्जातकम्' मास्टर खेलडीलाल एण्ड संस, बनारस, १२ अध्यायः।
५. सीतारामझा, सारावली २१ अध्यायः। मास्टर खेलाडीलाल, एण्ड संस, बनारस।
६. जातक पारिजात, चौखम्बा संस्कृत सीरिज, बनारस, ७/१६४–१८१, पृ. २५४–२६३।
७. पण्डितमहेशः, रणवीरज्योतिर्महानिबंधः, जम्बू काश्मीर सरकार जम्बू, १–५२ श्लोकः, पृ. २३१–२३८।
८. बृहज्जातकम्, मास्टर खेलडीलाल एण्ड संस, बनारस, १२/१।

भवेयुस्तदा मूसलनामायं योगः। अत्रोत्पन्नो जातकः मानी, धनी, ज्ञानी भूपप्रियः, बहुपुत्रयुतः स्थिरचित्तश्च भवति।

(३) यदि सर्वे ग्रहाः द्विस्वभावराशिषु (मिथुनकन्याधनुमीनेषु)

भवेयुस्तदा नलाख्यो नामकोऽयं योगः।

जातकश्चात्र न्यूनातिरिक्तदेहो धनसञ्चयभागी निपुणो बन्धहितकरः सुरूपश्च जायते।

दलनामकयोगद्वयं निरूप्यते।

(१) केन्द्रत्रयगता यदि सौम्यग्रहाः भवेयुस्तदा मालानामकोऽयं योगः। अत्र समुत्पन्नोः नरः सुखी, वाहनवस्त्रान्नभोगसम्पन्नः स्वरूपः, बहुस्त्रीकश्च भवति।

(२) केन्द्रत्रयगता यदि पापग्रहाः स्युस्तदा सर्पनामको योगः।

अत्रोत्पन्नोः मानवो विषमः, क्रूरः, निःस्वः, नित्यं दुःखार्दितः परभक्षपाननिरतश्च कथितः।

**आकृतियोगानां निरूपणम्–**

(१) समीपस्थकेन्द्रद्वये सर्वग्रहावस्थाने गदा नामको योगः

**फलम्** :– सततधनोद्योगी, यज्वा, शास्त्रसङ्गीतकुशलः, धनसुवर्णरत्नसम्पत्संयुतो मानवो निगदितः।

(२) लग्नसप्तमगैः सर्वैः ग्रहैः शकटो नाम योगः

**फलम्** :– रोगार्तः, कुनखो, मूर्खः, शकटानुजीवी, निःस्वः, मित्रस्वजनविहीनो नरो भवति।

(३) चतुर्थदशमस्थैः सर्वग्रहैर्विहगो नाम योगः।

भ्रमणरुचिर्विकृष्टो दूतो सुरतानुजीवी, धृष्टः कलहप्रियो मानवोऽत्रोत्पन्नो निर्दिष्टः।

(४) त्रिकोणस्थैः (लग्नपञ्चमनवमगैः) सर्वग्रहैः शृङ्गाटको नाम योगः। अत्रोत्पन्नः कलहप्रियः, योद्धा, सुखी, राजप्रियः शुभकलत्रो, धनाढ्यो भवति।

(५) अन्यत्रिकोणस्थैः (द्वितीयषष्ठदशमस्थैतृतीयसप्तमैकादशस्थानगैर्वा) सर्वैः ग्रहैर्हलनामको योगः। हलजातो नरो बह्वाशी, दरिद्रः कृषीवलो, दुःखितः सोद्वेगः सुहृद्बन्धुयुतः प्रेष्यश्च कथितः।

(६) लग्नसप्तस्थशुभैः ग्रहैस्तथा चतुर्थदशमगैः पापैर्वज्रो नाम योगः। अत्र जातो नरः

आद्यन्तवयः सुखी, शूरः, सुभगो, निरीहः, खलो, भाग्यहीनः विरुद्धश्च भवति।

(७) लग्नसप्तमस्थैः पापस्थै चतुर्थदशमस्थैः शुभै(पूर्वयोगस्य वैपरीत्ये)र्यवो नाम योगः। इह जातो मानवो व्रतनियममङ्गलपरो वयसो मध्ये सुखी, सुखधनपुत्रयुतो दाता स्थिरचित्तश्च जायते।

(८) केन्द्रचतुष्टयगतैः सर्वैर्ग्रहैः कमलसञ्ज्ञको योगः।

**फलम् :–** विपुलकीर्तिः, शुद्धो, विभवगुणाढ्यः, स्थिरायुः, पृथ्वीशश्च भवति।

(९) वैपरीत्येऽर्थात् केन्द्रादन्यस्थानगैः सर्वैर्ग्रहैर्वापीसञ्ज्ञको योगो निगदितः।

**फलम् :–** स्थिरार्थसुखसंयुतो नयनसुखसम्प्रहृष्टो निपुणधीः पुत्रवाँश्च भवति।

(१०) लग्नादारभ्य भावचतुष्टयपर्यन्तगैः सर्वैर्ग्रहैः यूपाख्यो योगः।

अत्र जातो नरः सत्वसम्पन्नः स्त्रीयुतो यज्ञरत आत्मविद्व्रतनियमतश्च जायते।

(११) चतुर्थस्थानादारभ्य सप्तमस्थानगैर्ग्रहैः शरो नाम योगः।

अत्र जात इषुकारः, कारागाराधीशो मृगयाधनसेवितो मांसादो हिंस्रः कुशिल्पकारश्च भवति।

(१२) सप्तमभावादारभ्य दशमादिचतुष्टयभावस्थैर्ग्रहैः सर्वैः शक्तिसञ्ज्ञको योगः।

अनेन धनहीनो बिफलोऽलसो, दुःखितो, नीचः, संग्रामबुद्धिनिपुणो दीर्घायुश्च भवति नरः।

(१३) दशमस्थानादारभ्य लग्नादिचतुष्टयभावस्थैः सकलैर्ग्रहैर्दण्डाख्यो योगः। एतेन हतपुत्रदारो, निःस्वो, निर्घृणःस्वजनबाह्यो, दुःखितो, नीचः प्रेष्यश्च भवति।

(१४) लग्नादारभ्य सप्तमभावस्थगैः सकलैर्ग्रहैर्नौका नामको योगः।

फलञ्चास्य मनुष्यो बह्वाशी, सलिलोपजीविविभवः, ख्यातकीर्तिर्दुष्टः कृपणो मलिनो लुब्धः खलश्च प्रोक्तः।

(१५) चतुर्थस्थानादारभ्य सप्तमभावदशमस्थानपर्यन्तग्रहैः कूटो नाम योगः। अत्रजातो नरोऽनूतनवादी कारागारपतिर्निस्वः, शठः, क्रूरो गिरिदुर्गवासी च भवति।

(१६) सप्तमभावादारभ्य सप्तस्थानादिचतुर्थभावान्तगैः सर्वैर्ग्रहैश्च्छत्रो नाम योगः।

अत्रोत्पन्नो नरो दयावान् नानानृपवल्लभः, प्रकृष्टमतिदीर्घायुः प्रथमान्म्यवयः सुखी, आतपत्री च भवति।

(१७) दशभावादारभ्य सप्तमभावादिचतुर्थस्थानपर्यन्तगैर्ग्रहैश्चापाख्यो योगः। अनेन कितवश्चौरो

भाग्यहीनो वयोमध्ये शुभो गुप्तपाल आनुतिकः वपेचरश्च भवति।

(१८) द्वितीयतृतीयपञ्चमषष्ठनवैकादशद्वादशस्थानेभ्यः क्रमशः आरभ्य सप्त स्थानान्तं सर्वैर्ग्रहैरष्टप्रकारेणार्द्धचन्द्रो योगो भवति।

द्वितीयस्थानादष्टमभावान्तम्। तृतीयस्थानान्नवमान्तम्। पञ्चमस्थानादेकादशान्तम्। अष्टमाद्वितीयान्तम्। नवमा तृतीयान्तम्। एकादशात्पञ्चमान्तम्। द्वादशात्षष्ठान्तम्। अत्रोत्पन्नो नरो नृपप्रियो बली सुन्दरवपुर्मणिसुवर्णभूषणयुतश्च जातको भवति।

(१९) लग्नादारभ्यैकान्तरस्थैः (प्रथमतृतीयपञ्चमसप्तमनवमैकादशभावगैरित्यर्थः)– सर्वैर्ग्रहैश्च-क्राख्यो योगः। एतेन चक्रवर्ती मानवो भवति।

(२०) द्वितीयस्थानादेकान्तरस्थैः (द्वितीयचतुर्थषष्ठाष्टमदशमभावगैरित्यर्थः) सर्वैर्ग्रहैः समुद्राख्यो नाम योगः।

अनेन बहुरत्नधनसमृद्धो भोगयुतो धनजनप्रियः ससुतः स्थिरविभवः साधुशीलश्च भवति।

**संख्यायोगाः–**

(१) सर्वे ग्रहाः यद्येकस्मिन्नेव भावे भवेयुस्तर्हि गोलाख्यो नाम योगः।

बलवान् निःस्वो विद्याविज्ञानहीनो मलिनो नित्यं दुःखितो दीनश्च नरो भवति।

(२) राशिद्वये सर्वे ग्रहाः भवेयुस्तदा युगाख्यो नाम योगः।

पाखण्डी धनहीनो लोकबहिष्कृतः सुतमातृधर्मरहितश्च नरो भवति।

(३) भावत्रयगते सर्वे ग्रहाः शूलाख्यो योगः।

तीक्ष्णोऽलसः धनहीनो हिंस्रो महाशूरः सुबहिष्कृतः संग्रामलब्धयशश्च जातको भवति।

(४) भावचतुष्ट्यगतैर्ग्रहैः सकलैः केदारो नाम योगः।

कृषीवलः, सत्यवादी, सुखी, धनी, चञ्चलस्वभावश्च भवति।

(५) पञ्च राशिस्थितैः सर्वैर्ग्रहैः पाशाख्यो योगः।

पाशसमुत्पन्नो नरो कार्यदक्षः, बहुभाषी, शीलरहितो, बहुभृत्यः, सम्प्रतानो, बन्धनभागी, प्रपञ्ची च भवति।

(६) षड्राशिस्थितैः सर्वैः ग्रहैर्दामाख्यो योगः।

**फलम् :–** धनी, मानी, महेश्वरो विद्वाँश्च भवति।

(७) सप्तस्थानगैः सर्वैः ग्रहैर्वीणाख्यो योगः।

वीणायोगेन प्रियगीतनृत्यवाद्यो निपुणः, सुखी, धनी, राजनायकः बहुभृत्यश्च जायते।

**गजकेसरिप्रभृतयो राजयोगाः–**

नाभसयोगवर्णनान्तरमन्येषामप्यतिमहत्वपूर्णानां राजयोगानां पराशरेण विवेचनं विहितम्।

(१) तत्रादौ गजकेसरिसंज्ञको महान् योगो निरूप्यते तस्य भेदद्वयमस्ति।

(१) चन्द्राद्यदि बृहस्पतिः केन्द्रे स्यात्तदा गजकेसरी योगः।

(२) यदि गुरुशुक्रबुधाः नीचङ्गताः अस्तमिताः वा न भवेयुः, तैश्चन्द्रश्च दृष्टः स्यात्तदापि गजकेसरी नामको योगः।[९]

लग्नाच्चन्द्राद्वा यदि केन्द्रे शुभग्रहदृष्टो युतो भवेत्तथा स च नीचास्तङ्गतः शत्रुदृष्टश्च न स्यात्तदा गजकेसरी योगः।[१०]

परन्त्वत्र मुम्बईसंस्करणस्यैव लक्षणमुचितम्।

**फलम् :–** अत्रोत्पन्नो नरो मेधावी तेजस्वी गुणसम्पन्नो राजप्रियकरो धनवान् च भवति।

**( २ ) द्वितीयमलायोगमाह–**

लग्नाच्चन्द्राच्च दशमे शुभग्रहः स्थितश्चेत्तदामलाख्यो योगः।

अस्मिन् योगे जातः पुरुषो राजपूज्यो महायोगी दाता बन्धुजनप्रियः परोपकारी गुणवान् जायते।

**( ३ ) पर्वतयोगः–**

भेदद्वयमस्ति–

(१) केन्द्रेषु शुभग्रहाः भवेयुः षष्ठे चाष्टमे ग्रहाभावे शुभग्रहयुते वा पर्वताख्यो योगः।[११]

---

९. बृ. पा. पू. भा. २२/९, २ (मुम्बई-सं.)

१०. बृ. पा. पू. भा. ३६/३ (काशी-सं.)

११. अत्र काशी-संस्करणे सपत्नशब्दस्थाने सप्तशब्दोल्लेखः (बृ.पा. काशी-सं.) ३६/७। सप्तमशब्दस्तु नोचितः। जातकपारिजातेऽपि सपत्नशब्दस्यैवोल्लेखात्: कपिलेश्वरशास्त्री, जातकपारिजातः ७/१२८, चौखम्बा संस्कृत सीरीज, बनारस।

(२) लग्नेशाऽन्त्येशौ (द्वादशेशः) यदि परस्परं केन्द्रगतौ मित्रदृष्टौ च भवे तदाऽप्यायंयोग[१२]।

**फलम्–** एतद्योगजो नरः भाग्यान्वितो, विद्याविनोदरतो, दाता, कामी यशस्वी, तेजस्वी, पुरनायकश्च भवति।

**काहलयोगः–**

भेदद्वयमस्ति।

(१) यदि गुरुचतुर्थेशौ परस्परं केन्द्रस्थौ भवेतान्तथा लग्नेशश्च बलवान् स्यात्तदा काहलाख्यो योगः।

(२) यदि चतुर्थेशः स्वोच्चस्थ उच्चो वा दशमेशयुतो दृष्टो वा स्यात्तदा काहलयोगजो।

**फलम्–** नरः ओजस्वी, साहसी, मूर्खश्चतुरङ्गसेनायुतो यत्किंचिद्ग्रामाधीशो भवति।

**(४) चामरयोगः–**

भेदद्वयम्।

(१) लग्नेश उच्चस्थो गुरुदृष्टः केन्द्रे स्यात्।

(२) शुभग्रहद्वयलग्ने नवमे सप्तमे दशमे वा भवेत् तदा चामरो नाम योगः।

**फलम्–** अत्र जातो नरो नृपो वा राजपूज्यो, चिरञ्जीवी, पण्डितो, विद्वान्, वाग्मी, सर्वज्ञो, वेदशास्त्राधिकारी, भवति तस्यायुः सप्ततिवर्षमितं भवति।[१३]

**(५) मालिकायोगः–**

लग्नद्वितीयादिद्वादशभावेभ्य आरभ्य यदि सप्तस्थानेषु क्रमशः सप्तग्रहाः भवेयुस्तदा द्वादशभेदात्मको मालिका भवति। सञ्ज्ञा फलञ्च निम्नप्रकारेण।

लग्नादारभ्य लग्नमालिका। **फलम्–** महीपतिरनेक-गजाश्वनाथः द्वितीयस्थानादारभ्य वित्तमालिका। **फलम्–** निधिपतिपितृभक्तिरतः धीरोग्ररूपो धनवान् चक्रवर्ती च।

तृतीयस्थानादारभ्यविक्रममालिका। **फलम्–** भूपः शूरो धनिकश्च रोगी। सुखस्थानादारभ्य सुखमालिका। **फलम्–** बहुदेशभाग्यभोगी महादानीभूपः।

---

१२. अस्य योगान्तरस्य काशी-संस्करणे नोल्लेखः।

१३. आयुषः काशी-संस्करणे नोल्लेखः।

पुत्रस्थानादारभ्य पुत्रमालिका। **फलम्–** नरपतिर्यज्वा कीर्तिमान्।

षष्ठस्थानादारभ्य षष्टमालिका। **फलम्–** क्वचित् धनसुखयुतो दरिद्रो वा।

सप्तमस्थानादारभ्य कामादिग्रहमालिका। **फलम्–** बहुस्त्रीवल्लभोभूपतिश्च।

अष्टमस्थानाद रभ्याष्टममालिका। **फलम्–** दीर्घायुर्धनवर्जितः स्त्रीनिर्जितश्च।

एवं धर्मादिग्रहमालिका। **फलम्–** गुणनिधिर्यज्वा तपस्वी विभुः।

कर्मादिमालिका। **फलम्–** धर्मकर्मनिरत सम्पूजितः सज्जनैः।

लाभमालिका। **फलम्–** राजवराङ्गनामधिपतिः सर्वक्रियदक्षकः।

रिःफगृहमालिका। **फलम्–** बहुव्ययकरः सर्वत्र पूज्यश्च जातको भवति।

**( ६ ) शङ्खयोगः–**

भेदद्वयम्–

(१) यदि पञ्चमेशषष्ठेशौ परस्परं केन्द्रगौ भवेतान्तथा लग्नेशश्च बलवान् स्यात्तदा शङ्खाख्यो योगः।

(२) लग्नेशदशमेशौ चरराशिस्थौ भवेतान्तथा भाग्येशश्च बलवान् भवेत्तदा शङ्खाख्यो योगः। **फलम्–** अत्र जातो नरो भोगशीलो दयालुः स्त्रीपुत्रार्थक्षेत्रवान् पुण्यकर्मा शास्त्रज्ञानाचारसाधुक्रियवान् भवेत्तथास्याशीतिवर्षन्तमायुः प्रोक्तम्।[१४]

**( ७ ) भेरीयोगः–**

भेदद्वयम्–

(१) द्वितीयद्वादशप्रथमसप्तमभावेषु ग्रहेषु सत्सु तथा दशमेशे बलवति भेरीयोगः।

(२) बृहस्पतेः सकाशात् शुक्रजन्मलग्नेशौ केन्द्रगतौः नवमेशे च बलवति भेरीयोगः। **फलम्–** दीर्घायुर्विगतरोगभयो नरेन्द्रो बह्वर्थभूमिसुतदारयुताः प्रसिद्ध आचारभूरिसुखशौर्यो महानुभावश्च भवति।[१५]

---

१४. काशी–संस्करणे नास्य नोल्लेखः।

१५. अत्रापि काशी–संस्करणे स्वरूपे फले च भेदः आयुषो नोल्लेख फलेऽपि किञ्चिद्विभेदः। दशमेशस्थाने नवमेशस्योल्लेखः। फलेऽपि सङ्क्षेपः। बृ.पा. ३६/१५, १६ (काशी–सं.)

**(८) मृदङ्गयोगः–**

जन्मकाले यो ग्रहः स्वोच्चराशिस्थस्तन्नवांशेशो यदि केन्द्रकोणस्थः स्वोच्चराशिस्थो भवेत् लग्नेशश्च बलवान् स्यात्तदा मृदाङ्गाख्यो योगः।

**फलम्–** एतद्योगजातः कल्याणरूपनृपतुल्ययशश्च भवति।[१६]

**(९) श्रीनाथयोगः–**

सप्तमभावेशो दशमस्थः स्यात्तथा दशमेशश्चोच्चस्थो नवमेशयुतो भवेत्तदा श्रीनाथाख्यो योगः।

**फलम्–** एतेन योगेन नरो नृपः सुरेन्द्रतुल्यो भवति।

**(१०) शारदयोगः–**

भेदद्वयम्–

(१) दशमेशे पञ्चमस्थे बुधे केन्द्रस्थे स्वराशिस्थे पूर्णबलान्विते च सूर्ये शारदनामयोगः।

(२) चन्द्राद् बृहस्पतौ कोणस्थे (नवमपञ्चमस्थानगते इत्यर्थः)

भौमे च बुधाद् कोणस्थे (नवमं पञ्चमं वोपगते इत्यर्थः)

बुधश्च बृहस्पतिसकाशादेकादशस्थश्च स्यात्तदा शारदाख्यो योगः।[१७]

**फलम् :–** धनी-मानी-सुखी-स्त्रीपुत्रयुतो धर्मात्मा च प्रोक्तः।

**(११) अथ मत्स्ययोगः–**

लग्नान्नवमे च पापयुते सति पञ्चमे च शुभाशुभोभयग्रहयुते चतुर्थेऽष्टमे वाऽपि पापयुते सति मत्स्याख्यो योगः।

**फलम्–** कालज्ञः करुणासिन्धुर्गुणवान्-बलरूपवान्-यशस्वी-विद्वान्-तपस्वी च भवति।[१८]

---

१६. अत्र काशी-संस्करणे भेद दृश्यते। अथल्लिग्नेशो बलवान् स्यादन्ये ग्रहाश्च स्वोच्चस्था केन्द्रगाश्च भवेयुस्तदा मृदङ्गयोगः। बृ.पा. ३३/१७ (काशी-सं.)

१७. अत्र काशी-संस्करणे भेदः। अर्थाद्दशमेशः पञ्चमस्थो बुधः केन्द्रगः सबलः सूर्यश्च स्वराशिगो भवेदथ वा चन्द्रात्कोणगो गुरुर्बुधो वा स्याद्भौमश्चैकादशस्थो भवेत्तदा शारदानाम योगः।
बृ.पा. ३६/१८-२० (काशी सं.)

१८. अत्र काशी-संस्करणे पापस्थाने सौम्यपाठः। जातकपारिजाते तु पापपाठ एव। अतश्च मुम्बई-संस्करणस्यैवोचित्यम्।
बृ. पा. (मुम्बई-सं.), २२/२६, बृ.पा. (काशी-सं.) ३६/२१।
कपिलेश्वर शर्मा, जातक-पारिजातः ७/१४६, चौखम्बा संस्कृत सीरिज, बनारस।

**(१२) कूर्मयोगः–**

सप्तपञ्चमषष्ठमभावेषु स्वोच्चाः मित्रग्रहनवांशगताः सौम्यग्रहाः भवेयुस्तृतीयलाभलग्नगताश्च मित्रगृहस्थाः उच्चस्थाः वा पापग्रहाः स्युस्तदा कूर्माख्यो योगः।

**फलम्–** कूर्मयोगजो नरो भूपो, धीरो, धर्मसत्त्वगुणान्वितो, सुखी, राजभोगी प्रसिद्धश्च जायते।

**(१३) खड्गयोगः–**

नवमेशश्च द्वितीयस्थः स्याद्द्वितीयेशश्च नवमस्थो भवेल्लग्नेशे केन्द्रकोणगे सति खड्गाख्यो योगः अनेन मनुष्यो, धनभाग्ययुतो, निर्मत्सरो, वेदार्थशास्त्रनिखिलागमतत्त्वज्ञो, युक्तिबुद्धिप्रतापबलवीर्यान्वितः, कुशलः, कृतज्ञश्च भवति।

**(१४) लक्ष्मीयोगः–**

नवमेशे केन्द्रे मूलत्रिकोणस्थे परमोच्चगे च सति लग्नेशे च बलान्विते लक्ष्मीसञ्ज्ञको योगः।

**फलम्–** गुणाभिरागो, बहुदेशनाथो, विद्वान्, महाकीर्तियुतः, कामदेवसदृशः, बहुदारपुत्रो, राजाधिराजश्च भवति।[१९]

**(१५) कुसुमयोगः –**

स्थिरलग्ने सति शुक्रकेन्द्रगश्चन्द्रः पञ्चमे शनिश्च दशमे स्यात्तदा कुसुमाख्यो योगः।

**फलम्–** दाता, नृपवन्द्यो भोगी, कुलमुख्यो, गुणी, विद्वान्, सुखी च जायते नरः।

**(१६) कलानिधियोगः–**

द्वितीये पञ्चमे वा गुरुर्बुधशुक्रयुतो दृष्टो वा स्यादथवा शुक्रबुधयोः क्षेत्रेषु (मिथुनकन्यावृष-तुलास्वित्यर्थः) स्थितो भवेत्तदा कालनिधि योगः।

**फलम्–** गुणवान् कामी, नृपवन्दितो, रोगहीनो, धनी, मानी, विद्वान्, सेना-तुरङ्गमदवारणशङ्खभेरी-वाद्यान्वितश्च भवति।

**(१७) पारिजातयोगः–**

लग्नेशाधिष्ठितराशिनाथो यद्भावस्थः स्यात्तद्राशिस्वामी तन्नवांशस्वामी वा केन्द्रत्रिकोणस्थः स्वोच्चगो वा स्यात्तदा पारिजातसञ्ज्ञको योगः।

---

१९. अत्र नवमेशेन सह शुक्रस्यापि सन्निवेशः फलदीपिकायाम्।
मन्त्रेश्वरः, फलदीपिका ६/२१, ५० थर्ड क्रास रोड, बासावांगुदी, बंगलोर।

**फलम्–** मध्यान्तवय:सौख्य:, नृपवन्द्यो, योद्धा, गजाश्वपति:, स्वकर्मधर्मरतो दयालुश्च नरो भवति।

**(१८) लग्नाधियोग:–**

लग्नात्सप्तमाष्टामस्थै: पापदृष्टियोगवर्जिते: शुभैर्ग्रहै: पापग्रहरहिते च चतुर्थे भावे लग्नाधियोग:।

**फलम्–** बहुशास्त्रकर्ता, विद्याविनीतो, बलाधिकारी, निष्कपटो, यशस्वी, धनी, गुणी, मानी, महात्मा, सुखी च भवति।

**हरिहरब्रह्मयोगा:–**

(१) द्वितीयभावपते: सकाशाद्द्वितीयद्वादशाष्टमभावगा: शुभा: ग्रहा: भवेयुस्तदा हरियोग:।

(२) सप्तमभावेशाच्चतुर्थनवमाष्टभावगा: गुरुचन्द्रबुधा: भवेयुस्तदा हरयोग:।

(३) लग्नेशाच्चतुर्थदशमैकादशभावगा: सूर्यशुक्रभौमा: ब्रह्मयोग:। एवमेतद्योगत्रयमुपपन्नम्।

**फलम्–** योगत्रये समुत्पन्नो विद्वान्धनपुत्रादिसंयुत:, सुखी च भवति।[२०]

चन्द्रात् द्वितीयस्थाने ग्रहश्चेत्तदा सुनफाख्यो योगो द्वादशे ग्रहश्चेत्तदाऽनफाख्यो योग उभयत्र ग्रहौ चेत्तदा दुरधराख्यो योग उभयत्र ग्रहाभावस्तदा केमद्रुमनामको योग:।

आद्ययोगत्रयस्य फलमुत्तमं चतुर्थस्य नोत्तमम्। अन्येषु बहुषु योगेषु सत्स्वपि केमद्रुमयोगे कुफलं नि:स्वत्वं भवति।[२१] अत्र केमद्रुमयोगस्य भङ्गेऽपि कानिचिल्लक्षणान्याचार्येण निगदितानि तेषां विचारोऽत्रावश्यक:।

यदि चन्द्रश्च शुभग्रहदृष्टश्चेत्तथा सर्वे ग्रहा: केन्द्रस्था भवेयुस्तदाप्ययं योगो विनश्यति यथा चात्र ग्रन्थकार:–

**सर्वे खेटा: केन्द्रचतुर्थेषु संस्था दुष्टो योगश्चापि केमद्रुमोऽयं।**
**दुष्टं सर्व स्वं फलं संविहाय कुर्यु: पुंसां सत्फलं वै विचित्रम्॥**[२२]

---

२०. अस्य योगस्य मुम्बई-संस्करणे नोल्लेख:।

२१. अत्र जातकपारिजातकार:
'योगे केमद्रुमे प्राप्ते यस्मिन् कस्मिंश्च जातके।
राजयोगा विनश्यन्ति हरिं दृष्ट्वा यथा द्विपा:॥'
कपिलेश्वर शर्मा, जातकपारिजात:, ७/८२, चौखम्बा संस्कृत सीरिज, बनारस।

२२. बृ.पा.पू.भा. २२/५८ (मुम्बई-सं.)

**जातकपारिजातकारोऽपि–**

> **निशाकरे केन्द्रगते भृगौ वा जीवेक्षिते नैव दरिद्रयोगः।**
> **शुभान्विते वा शुभमध्यगेन्दौ जीवेक्षिते नैव दरिद्रयोगः।।**[२३]

**सौरयोगाः**

चन्द्रं विना सूर्यस्थभावद्वितीयस्थे ग्रहे वैशि द्वादशस्थे च वाशि तथोभयत्रस्थैः ग्रहैरुभयचरी नामकयोगाः भवन्ति। योगत्रयाणां शुभग्रहैः शुभफलमशुभैरशुभं मिश्रैश्च मिश्रं फलं भवति।

**पञ्चमहापुरुषयोगाः–**

अत्र राजयोगानां मध्ये मङ्गलबुधगुरुशुक्रशनयो यदि स्वस्था उच्चस्था वा केन्द्रे भवेयुस्तदा क्रमाद्रुचकभद्रहंसमालव्यशशसञ्ज्ञकाः पञ्च महापुरुषनामकयोगाः भवन्ति। एतेषां योगानां प्रायः सर्वेषु ग्रन्थेषु विस्तरोपलभ्यते। फलमपि सर्वेषां योगानामुत्तममस्ति।[२४]

**अन्यविविधयोगाः–**

राजयोगानां निरीक्षणं लग्नद्वये कर्तुं शक्यते। जन्मलग्ने कारकांशलग्ने वेति। बलाबलमपि योगस्यात्मकारकपुत्रकारकयोस्तथा लग्नेशपञ्चमयोः परस्परं सम्बन्धानुसारमूह्यते। तथा हिः–

लग्नेशः पञ्चमस्थाने पञ्चमेशश्च लग्ने (एवं कारकांशेऽपि ज्ञेयम्) च स्यातामथवात्मकारकपुत्र-कारकावुभावपि लग्ने पञ्चमे स्वोच्चस्थौ स्वांशस्थौ शुभग्रहदृष्टौ भवेतान्तदा महाराजनामको योगोभवति। अत्र नरः ख्यातः सुखी च भवति। नवमेशात्मकारकौ लग्ने पञ्चमे सप्तमे वा शुभग्रहदृष्टौ स्थितौ भवेतान्तर्हि जातको राजा भवति। अत्र वात्मकारकांशाल्लग्नेशाद्वा तृतीये षष्ठे पापग्रहयुते दृष्टे वाऽपि राजावति। पापशुभग्रहमिश्रसंयोगे केवलं धनी भवति।

नवमेश आत्मकारकश्च द्वावेव लग्ने पञ्चमे सप्तमे वा शुभग्रहयुतौ दृष्टौ वा भवेतान्तदापि राजयोगः प्रोक्तः।

लग्नेशात्कारकाच्च द्वितीये चतुर्थे पञ्चमे च शुभग्रहयोगे राजा भवति। एवमेव तृतीये षष्ठे च पापग्रहयोगे (युते दृष्टे वेत्यर्थः) सत्यपि राजा भवति। मिश्रग्रहैस्तु केवलं धनी भवति।,

कारके ततः पञ्चमे वा लग्ने लग्नपदे वा गुरुचन्द्रदृष्टे युते वा शुक्रे सति राजवर्गीयो भवति।

---

२३. कपिलेश्वर शास्त्री, जातकपारिजातः ७/८०, ८१, चौखम्बा संस्कृत सीरिज, बनारस।

२४. जातक-पारिजातः, चौखम्बा संस्कृत सीरिज, बनारस ७/५९-६५।
सारावली, मास्टर खेलाङीलाल एण्ड संस, बनारस, ३७ अध्यायः सकलः।
अनूप मिश्रः, मानसागरी, भार्गव पुस्तकालय, काशी, ४/१-१८।

यद्येक एव ग्रहो जन्मलग्नं होरालग्नं घटीलग्नञ्च पश्यति तदापि महान् राजयोगो भवति।[२५]

एतल्लग्नत्रये लग्नद्रेष्काणनवांशलग्नत्रये वा स्वोच्चस्थो ग्रहो भवेत्तदापि राजयोगो भवति। यदि सूर्यादयेग्रहा: स्वस्था: स्वांशस्था: द्रेष्काणस्था: वा लग्नं सप्तमञ्च पश्येयुस्तदापि राजयोगप्रदा: भवन्ति।

**दृष्टियोगमधिकृत्य राजयोगबलकथनम्–**

पूर्णदृष्टौ सति पूर्णयोगोऽर्द्धदृष्टौ सति चार्द्धयोग: पाददृष्टौ तु पादयोगो राजयोगो भवतीति भाव:।

अत्र लग्नसप्तमस्थानयोरपि विशेष उक्त:। लग्नसप्तमयोर्ग्रह: राजयोगप्रद:। अस्य नवांशद्रेष्काणलग्नयोरपि विचारो विधेय:। तत्रापि लग्नसप्तमसम्बन्धवैशिष्ट्यं राजयोगप्रदम्। अस्य स्वोच्चादिकस्थत्वे त्वन्यदपि महत्त्वमिति।

राशिहोराद्रेष्काणनवांशत्रिंशांशेष्वेतेषु षड्वर्गबलद्योतकलग्न: यद्येकेनैव ग्रहेण दृष्ट: युत: वा भवेत् तदा राजयोगी जायते।

लग्नं पश्यन्त: सर्वे ग्रहा: शुभफलप्रदा आचार्येण स्वीकृता: किं बहुना। यदि नीचग्रहोऽपि लग्नं वा पश्येत्तर्हि राजयोग उच्यते।

लग्ने द्वितीये च शुभग्रहयुते तृतीये च पापान्विते चतुर्थे च शुभग्रहाश्रिते नरो राजा वा तत्समो जायते।

चन्द्रगुरुशुक्रान्यतम एकोऽपि ग्रह: स्वोच्चस्थो द्वितीयभावगश्च स्यात्तदा राजयोगो वाच्य:।

यदि षष्ठेशाष्टमेशौ शुभग्रहौ यत्रकुत्रस्थौ लग्नं पश्यस्तदपि राजयोगो ज्ञेय:।

गुरुबुधशुक्रान्यतम एकोऽपि ग्रह: स्वोच्चस्थ: स्यादन्ये शुभग्रहा: केन्द्रगा: स्युस्तदपि राजयोगो निगदित:।

केन्द्रेषु शुभग्रहेषु तृतीयषष्ठैकादशेषु च पापेषु हीनवंशजोऽपि राजा भवति।

---

२५. अस्य योगस्य चर्चा जैमिनिसूत्रे विशेषेण दृश्यते।
'जन्मकाल घटिकास्वेकदृष्टासु राजान:।'
जैमिनीयसूत्राणि १/३/२४, गंगाविष्णु श्रीकृष्णदास, लक्ष्मी वेंकटेश्वर स्टीम् प्रेस, बम्बई।

यदि ग्रहत्रयमुच्चस्थं जन्मकाले स्यादथवा ग्रहाणां चतुष्टयं पञ्चकं वा स्वोच्चत्रिकोणगं भवेत्तदापि हीनवंशजो राजा भवति।

यदि ग्रहाणां षट्कमुच्चस्थं स्यात्तदाचक्रवर्ती राजा भवति।

चन्द्रशुक्रौ यत्र कुत्रस्थौ तृतीयैकादशगौ परस्परं दृष्टौ वा भवेतान्तदापि राजयोगो ज्ञेयः।

दशमेशे स्वोच्चस्थे लग्नं पश्यति सति शुभग्रहेषु केन्द्रगेषु राजयोगः।

यदि चतुर्थस्थानगः शुभग्रहः स्यात्तर्हि राजयोगः।

यदि चतुर्थे चरराशिर्भवेत्तर्हि स्वल्पफलत्वं स्थिरराशौ तु मध्यमफलं द्विस्वभावे तु पूर्णफलं भवति।

यदि चोच्चस्थो ग्रहो कश्चिदेकादशस्थानगश्चतुर्थस्थानगो द्वितीयस्थानगो वा भवेत्तथा वाहनकारको (शुक्र इत्यर्थः) लग्नं पश्येत्तदपि राजयोगो भवति। बलाबलविचारेऽस्य योगस्य यदि न्यूनत्वं भवेत्तर्हि धनधान्यप्राप्तिस्तु निश्चितेति भावः भावहोराघटीनामकलग्नत्रयं द्वयं वा स्वोच्चस्थो ग्रहः पश्येत्तदापि राजयोगो ज्ञेयः।

**केन्द्रत्रिकोणसम्बन्धे राजयोगः–**

त्रिकोणत्रयं लक्ष्मीस्थानं केन्द्रचतुष्टयं विष्णुस्थानं प्रोक्तम्।

अनयोः परस्परसम्बन्धेन विशेषराजयोगो भवति।

तत्रापि चतुर्थपञ्चमयोर्नवमदशमयोर्योगे विशेषराजयोगो ज्ञेयः। केन्द्रपञ्चमयोर्योगेऽमात्ययोगः। यदि द्वौ केन्द्रपञ्चमेशौ पारिजातादिवर्गगौ स्यातान्तदा राजयोगस्य प्राबल्यं भवति। नवमेशदशमेशयोगे राजवन्दितो राजा भवति।

यदि दशमेशश्च नवमस्थः स्यात्तथा नवमेशश्च दशमस्थो भवेदथवा द्वावेवैकस्थौ भवेतामथवा परस्परं दृष्टो वान्यतरदृष्टिसम्बन्धयुक्तौ वा स्यातान्तदापि महान् राजयोगः। एतौ द्वौ पारिजातवर्गगौ भवेतान्तर्हि राजा लोकानुशिक्षको भवति। उत्तमवर्गगौ स्यातान्तर्हि राजा हस्तिघोटकरथादियुतो भवति।

गोपुरवर्गगौ चेत्तर्हि राजाऽन्यराजमण्डलपूजितचरणकमलो भवति। सिंहासनवर्गगौ यदि तदा सर्वपृथ्वीपालकश्चक्रवर्ती राजा भवति।

युधिष्ठिरशालिवाहननागार्जुनप्रभृतिकास्तु गोपुरवर्गयोगजाः समुत्पन्नाः।

मन्वादयो राजानस्तु पारावतवर्गजा आसन् ऐरावतवर्गजास्तु प्रथमजः स्वायम्भुवो मनुर्बभूव। हरिश्चन्द्रबलिवैश्वानराः सिंहासनवर्गजा अभवन्। देवलोकवर्गजास्तु भगवतो नारायणस्य सर्वे मत्स्यादिकल्किपर्यन्ता अवताराः निगदिताः।

एतेनैरावतादिवर्गाणामप्युत्तरोत्तरमधिकं प्राबल्यम योगः दृश्यते इति सुस्पष्टम्।

**अन्यदपि**

यदि वाहनेशो (चतुर्थेश इति) दशमस्थो दशमेशश्च चतुर्थस्थो वा भूत्वा पञ्चमेशेन नवमेशेन वा दृष्टश्चेत्तर्हि राजयोगः।

चतुर्थेशदशमेशौ पञ्चमेशेन नवमेशेन वा युतौ स्यात्तदपि राजयोगः।

पञ्चमेशो नवमेशेन लग्नेशेन वा युतो लग्ने चतुर्थे दशमे वा स्थितो भवेत्तर्हि राजवंशज एव राजा भवति।

गुरुर्यदि स्वराशौ (धनुर्मीनयोरिति) नवमस्थाने शुक्रपञ्चमेशसंयुतो भवेत्तदापि राजयोगः। पञ्चमेशदशमेशचतुर्थेशलग्नेशान्यतम एकोऽपि नवमेशेन युतो भवेत्तदा राजयोगो वाच्यः। अत्र सर्वे राजयोगाः जन्मलग्नादात्मकारकलग्नादपि विचार्याः।

**विशेषः–**

जन्मलग्ने लग्नेशपञ्चमेशयोरात्मकारकलग्ने आत्मकारकपुत्रकारकयोः सम्बन्धयोगे इमे राजयोगाः बलशालिनो भवन्ति।

लग्ने सप्तमे वा लग्नेशे सप्तमेशे आत्मकारके वा सति राजयोगः। एषु स्वोच्चस्थेषु स्वांशस्थेषु सत्सु राजयोगः प्रोक्तः।

**विशेषयोगमाह–**

मध्याह्नार्धरात्राद्वा सार्द्धघटीद्वयपर्यन्तमध्ये यदि कस्यचिज्जन्म स्यात्तदापि राजा धनी वा तत्समो जायते।

लग्नेशात्सप्तमेशाच्च द्वितीये चतुर्थे पञ्चमे च शुभग्रहयुते सति राजयोगः। एवञ्च तृतीये षष्ठे च पापयुतेऽपि राजयोगः। अस्मिन् योगद्वये शुभपापमिश्रे सति मिश्रं फलम् अर्थात् न राजा नैव दरिद्री चापितु प्राज्ञः प्रतिष्ठितः सामान्यधनान्वित इति भावः।

एवमेवात्मकारकादपि चतुर्थे पञ्चमे च शुभग्रहयुते सति राजयोगः तृतीये षष्ठे च पापयुते सत्यपि राजयोगः।

।।इति।।

# आयुर्वेदज्योतिषशास्त्रयोः रोगाणां वर्गीकरणम्

**डॉ. सुभाषचन्द्रमिश्रः**

**आयुर्हिताहितं वेदं निदानं शमनं तथा।**
**विद्यते यद् विद्वद्भिः आयुर्वेदः स उच्यते॥**

आयुर्हिताहितं यत्र आयुष्यरक्षणार्थं, व्याधिनिदानार्थं शमनार्थं च वर्णनं मिलति तत्रैव आयुर्वेदोऽस्ति। अत्र प्रश्नं समुदेति रोगस्य कारणं किम्? अस्य प्रश्नस्य विचारणार्थं रोगस्य ज्ञानम् आवश्यकं भवति। रोगाः के शरीरविकारादयः व्याधयः रोगास्सत्ति।

विकारो दुःखमेव।[१]
**जन्मान्तरकृतं पापं व्याधिरूपेण ज्ञायते।**[२] इति प्रसिद्धिः तथा च

**धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्।**
**रोगस्तस्यापहर्तारः श्रेयसो जीवितस्य तु॥**[३] जीवने रोगाः भवन्ति ते रागादयः।

**रागादिरोगाः**[४]–

**दुःख-आत्मेव गुणः। दुःखयति इति दुःखम्।**[५]

दुःखस्य कारणमूलं धातुवैषम्यादि व्याधिरूपेण ज्ञायते। एवं च अस्माकं शरीरे जन्मान्तरकृतं पापकर्मानुसारेण रोगस्योत्पत्ति र्भवति।[६] प्रश्नं समुदेति जन्मान्तरकृतं पापकर्माणां किम्? वैदिकदर्शनानुसारेण आत्मा अजर-अमर-अविनाशी चास्ति, परञ्च कर्मजनितबन्धनानुसारेण अनेकानि योनिषु भ्रमति जीवः। कर्मानुबन्धकारेण आत्मापरतन्त्र अविनाशी च दृष्टिगोचरो भवति। जन्मान्तरकृतकर्मणः त्रयो

१. माधवनिदानम्, अध्यायलक्षणम्, श्लोक-१
२. प्रश्नमार्ग १३/२९
३. चरकसंहिता, सूत्रस्थानम् प्रथमोऽध्यायः श्लोक १५
४. अष्टाङ्गसंग्रह-प्रथमोऽध्यायः।, प्रथमपृष्ठ
५. ज्योतिषशास्त्र में रोगविचार पृष्ठ १
६. ज्योतिषशास्त्र में रोग विचार पृष्ठ १

भेदाः सन्ति–

१. सञ्चितकर्म

२. प्रारब्धकर्म

३. क्रियामाण कर्म।

**सञ्चितकर्म**–जन्मान्तरकृतं कर्म समग्ररूपेण सञ्चितकर्म विद्यते।

**प्रारब्धकर्म**–सञ्चितकर्मणो यस्य भागस्य फलं प्राप्यते तदेव प्रारब्धकर्म।

**क्रियमाणकर्म**–वर्तमान्कालिककर्मेव क्रियमाणकर्मः।

कर्मफलभोगे व्याधयः भवन्ति?

व्याधयः द्विविधाः ते–

१. मिथ्याहारविहारजनितव्याधयः।[1]

२. कर्मजनित व्याधयः।

**मिथ्याहारविहारजनित व्याधयः**[2]

असम्यगाहार–विहारजनितव्याधयः स्वीयप्रमादेन उत्पद्यन्ते।

**कर्मजनितव्याधयः**

जन्मान्तरकृतानां सत्कर्मणां फलस्वरूपेणोत्पन्नविविधानि दुखान्येव कर्मजनितव्याधिनाम्ना व्यवह्रियन्ते **यथा वर्णितमस्ति**–''नास्ति रोगो विना दोषैः यस्मान्तस्माद्विचक्षणः–[3]

**सर्वेषामेव रोगाणां निदानं कुपिता मलाः।**
**तस्य प्रकोपस्य तु प्रोक्तं विविधादित सेवनम्॥**[4]

**रोगाणां वर्गीकरणम्–**

ज्योतिषशास्त्रे द्विविध रोगाणां चर्चा मिलति

१. ज्योतिषशास्त्रे रोग विचार, पृष्ठ ८
२. कर्मजव्याधि दैवी चिकित्सा, पृष्ठ ११
३. माधव निदान्, पञ्चनिदान लक्षणम्, श्लोक १४
४. " " " " १४

१. सहजरोगाः

२. आगन्तुकरोगाः

**सहजरोगाः**[१]

सहजरोगाः द्विविधाः

१. मानसिकरोगाः

२. शारीरिकरोगाः

**मानसिकरोग**–मानसिकरोगाः, मनसः सम्बन्धिनो भवन्ति सम्प्रति मानसिकरोगेषु मनः सम्बन्धी विकारोत्पद्यन्ते।

**शारीरिकरोगाः**–शारीरिकरोगेषु शरीरस्य कोप्यवयवः प्रभावितो भवति। यस्मिन् अङ्गविशेषे विविधाङ्गेषु वा रोगस्य उत्पत्तिर्जायते तदङ्गे तान्याङ्गानीव निपिडिताः भवन्ति।

**मानसिकरोगाः** मानसिकरोगाः अपि द्विविधाः–

१. दृष्टनिमित्तजन्यः

२. अदृष्टनिमित्तजन्यः

ये रोगाः प्रत्यक्षाः भवन्ति ते रोगाः दृष्टिनिमिन्तजन्यरोगाः भवन्ति। एवं च ये विकाराः दृष्टिमाध्यमेन गोचराः न भवन्ति, ते अदृष्टनिमिन्तजन्यरोगाः कथ्यन्ते। यद्यपि येषां रोगाणां प्रत्यक्षकारणानि न उपलभ्यन्ते परञ्च रोगाणां प्रभावेण जातकस्य शरीरं अस्वस्थं व्याधियुक्तञ्च भवति ते रोगाः केषांञ्चिदनिष्टग्रहाणां प्रभावेण पूर्वार्जितकर्मानुसारेण व जातकस्य शरीरे उत्पद्यन्ते।

**आगन्तुकरोगाः**–[२]

जातकस्य शरीरे जन्मजातरोगान् त्यक्त्वा ये-ये रोगाः जन्मतः पश्यन्, परिस्थितिजन्याः व शरीरे उत्पद्यन्ते त एव रोगाः आगन्तुकरोगाः। जन्मजातरोगः अपि दृष्टादृष्टनिमित्तभेदेन द्विविधाः भवन्ति। जन्मजातरोगाणां विचारः ज्योतिषाशास्त्रग्रन्थेषु आधानकुण्डल्यां जन्मकुण्डल्यां च भवति। लग्नषष्टाष्टम् स्थानैः तदीशैश्च, तम् अष्टमस्थानं, अष्टमेशः, अष्टमस्थानस्थितग्रहैश्च जन्मजातः शारीरिकरोगाणां विचारो भवति। अष्टमस्थानस्य, अष्टमेशस्य सम्बन्धानुसारेण रोगकारकयोगाः यदि दृश्यन्ते तदा ते रोगाः असाध्याः भवन्ति। असाध्यरोगाः चिकित्सकीयसाधनमाध्यमेन दुरीकर्तुं न

१. प्रश्नमार्ग भाग १ श्लोक १२

२. अष्टमेन तदीशेन तद्दृष्टातदगतेन वा, विज्ञातव्याः स्युरतेषां वीर्यतस्तत्कृता गदाः।। प्रश्नमार्ग प्रथममार्गः १२/१२

शक्यन्ते। यस्य रोगस्य सम्बन्धः अष्टमभावेन, अष्टमेन च न भवति स रोगः असाध्यः न भवति एवं च चिकित्सकीयसाधनमाध्यमेन तस्य रोगस्य उपचारः कर्तुं शक्यते। जातकस्य शरीरे उपस्थितान् हीनाङ्गरोगाणां साध्यतायाः विचारः अनेन प्रकारेण भवति।

यदा कस्यश्चित् रोगस्य सम्बन्धः अष्टमेश अष्टमस्थानेन सह भवति सः रोगः असाध्यरोगो भवति। परन्तु यस्य रोगस्य सम्बन्धः अष्टमस्थान अष्टमेशेन वा सह न दृश्यन्ते सः रोगः साध्यरोग कथ्यन्ते, चिकित्सकीयोपायेन तस्य रोगस्य प्रभावः दूरी कर्तुं शक्यते। जन्मजातरोगाणां विचारः अष्टमेशः, चतुर्थयोः परस्परम् दृष्टिसम्बन्धेन भवति। यदा कश्मिश्चिद् योगे अष्टमेश चतुर्थेशयोः प्रत्यक्षः दृष्टिसम्बन्धः भवति तर्हि असाध्यरोगो भवति। परन्तु यदा योगे सम्बन्धाभावः भवति स साध्यरोगो भवति।

**दृष्टिनिमित्तजन्यरोगः–**

यस्य रोगस्योत्पत्तिकारणं प्रत्यक्षतः दृष्टिगोचरं भवति स एव रोगः दृष्टिनिमिन्तजन्यरोगः भवति। उदाहरणेन– दुर्घटना, महामारी, हैजा, प्लेग, शापाभिचारादिमानासिकरोगाः। अस्थिरोगस्य विचारः जातकस्य जन्मकुण्डल्यां, षष्टस्थानेन, षष्ठेशानुसारेण, षष्ठस्थानात् स्थितग्रहानुसारेण षष्ठस्थानस्य दृष्टग्रहानुसारेण च क्रियते। षष्ठस्थानंरोगस्य प्रतिनिधिस्थानं भवति।

**अदृष्टनिमित्तजन्यरोगविचारः–**

यस्य रोगस्य कारणं प्रत्यक्षतः न दृष्टिगोचरं भवति स एव रोगः अदृष्टनिमित्तजन्यरोगो भवति। यथा- अतिसारः, डायरिया, कास, हिक्का, ज्वरादि, मूक-पङ्गु-बधिरः, हीनाङ्ग, कुष्ठादयो रोगाः।

ज्योतिषशास्त्रानुसारेण रोगाणां कारणं अशुभग्रहाणां प्रभावः भवति। अशुभग्रहाः शरीरस्य यस्याङ्गस्य धातोर्वा प्रतिनिधित्वं कुर्वन्ति जातकस्य तस्मिन् अङ्गे रोगस्य सम्भावना प्रबलाः भवन्ति। अतः अशुभग्रहस्य प्रभावेण जातकः शारीरिक-मानसिक विकारयुक्तः भवति।

आयुर्वेदानुसारेण वातः, पित्तः, कफरोगाणां प्रमुखकारणानि सन्ति। अस्यानुसारेण रोगस्य त्रयः प्रकाराः सन्तिः।

यथा–

१. निजरोगः
२. आगन्तुकरोगः
३. मानसिकरोगश्चेति।

''त्रयो रोगाः निजागन्तुमानसा''। येषां रोगाणामुत्पत्तिः वात-पित-कफदुष्प्रभावेण भवति ते रोगाः निजरोगाः। येषां रोगाणामुत्पत्तिः विष, अभिचारादि एवं च आकास्मिकघटनाकारणेन भवति त एव रोगाः आगन्तुका एवं च येषां रोगाणामुत्पत्ति इप्सितः वस्तुनः प्राप्तिद्वारा भवति, त एव रोगाः मानसिकरोगाः भवन्ति। यथा-ईर्ष्या, क्रोध, शोकादिमाध्यमेन येषां रोगाणांमुत्पत्तिर्जायते ते रोगा अपि मानसिकरोगाः भवन्ति। आयुर्वेदशास्त्रानुसारेण यथा वर्णनं कृतमस्ति तथैव रोगाणां गमनागमनस्य त्रयः मार्गाः सन्ति, ते सन्ति।[१] (१) शाखामार्गः (२) मर्म-अस्थि (३) कोष्ठः सन्धिश्च

**शाखामार्गः**-अयं रोगस्य बाह्यमार्गो अस्ति।

यदा शरीरे रोगस्य कारणं रक्तादिधातु, त्वक् भवन्ति तर्हि अयं मार्गः शाखामार्गनाम्ना ज्ञायते।

**मर्म अस्थिसन्धिश्च**-आयुर्वेदशास्त्रानुसारेण शरीरे शप्तोत्तरशतकसंशयमार्गाः सन्ति। एवं च शरीरे वस्ति, हृदय, मूर्धादिकाः सन्ति। अस्मिन् मार्गे शरीरे रोगस्य उत्पति र्भवति यथा- स्नायुरोगः एवं सन्धिरोगादयः।

**कोष्ठानुसारी मार्गाः**-अमाशयः, पक्वाशयः, मलाशयस्थानेषु विकारमाध्यमेन यस्य रोगस्य उत्पत्तिः स्यात्, स एव रोग कोष्ठानुसारी एवं च तस्य मार्गोऽयमाभ्यन्तरः।

शाखामार्गानुसारेण[२] यस्य रोगस्य उत्पत्ति स्यात् स एव रोगः मुख्यरूपेण अपच, रक्त-विकारः, रक्त-पित्तः, गण्डरोगः, कुष्ठरोगः, शोथः, गुल्मः, अर्शः, आदि।

**मध्यमार्गानुसारेण-**[३] अस्मिन् मार्गानुसारेण यस्य रोगस्य उत्पत्ति भवति, ते अस्ति अर्धाङ्गवात शोषरोगः, राज्यक्षमा, अस्थि-सन्धि-शूलः, हृदयरोग, गुदमांसादि एवं च वस्तिरोगः, ज्वरः कासः, अत्तिसारः, विसूचिकाः, हिक्काः, उदररोगः, प्लीहीरोगादि अर्थात् यस्य रोगस्य उत्पत्ति अन्तर्मार्गेण भवति ते सर्वेरोगा अपि कोष्ठानुसारी रोगाः भवन्ति।[४]

**साध्यासाध्यश्च रोगः**[५]-साध्यासाध्यभेदानुसारेण रोगाणां प्रकारं द्वयमस्ति।

**साध्यरोगः द्विविधः-**

१. सुखसाध्याः

१. चरक संहिता। सूत्रस्थानां/ एकादशोध्यायः। श्लोक ११/५१-५४
२. चरक संहिता सूत्रस्थान ११/५५
३. " " ११/५६
४. " " १०/८
५. " " ११/५७

२. कष्टसाध्याः।

**पुनश्च साध्यरोगस्य त्रयो विकल्पाः सन्ति–**[१]

१. अल्पोपायसाध्यः

२. मध्यमोपायसाध्यः

३. उत्कृष्टोपायसाध्यः

**असाध्यरोगस्य द्वौ प्रकारौ अस्तः।**[२]

१. याप्यरोगः

२. अयाप्यरोगः (अनुपक्रमरोगः)

**याप्यरोगः** ये रोगाः निश्चयरूपेण असाध्याः सन्ति त एव रोगाः अनुपक्रमरोगाः भवन्ति। ईदृशाः रोगाः कश्चित् अपि चिकित्सकीय एवं च केचनान्यमाध्यमेन साध्याः न भवन्ति।

**अङ्गेषु रोगः**[३] जातकशास्त्रे–जातकस्य जीवने घटित अनेकप्रकारेण रोगस्य वर्णनं भवति। यथा–शिरशूलः, अक्षिरोगः, श्रवणेन्द्रिय विकारः, खल्वाटरोगः, उन्मादरोगः, मिर्गीरोगश्च, मूर्द्धारोगश्च, अन्धरोगः, नासिका विकारः, कुष्ठरोगः, मुखदन्तरोग, गलगण्डादि, हृदयरोगादि, आमाशयिकविकारः, पाचनसम्बन्धीविकारः यथा–मन्दग्नि अतिसार कोष्ठवद्धता आदि।

**द्वादशवर्गानुसारेण रोगाणां विचारः-**[४]

द्वादशवर्गानुसारेण शरीरस्य विभिन्नाङ्गेषु रोगाणां विचारो भवति।

१. शिरोरोगाः– शिरशूलः, खल्वाटरोगः, उन्मादरोगः, मिर्गीरोगः, मूर्धारोगः।

२. नेत्ररोगः,–अन्धकाणादि, नेत्रविकारः।

३. कर्णरोगः–श्रवणेन्द्रियसम्बन्धीविकारः।

४. नासारोगः–श्वसनादिसम्बन्धीविकारः।

५. मुखरोगः–अत्रैव दन्तरोगः, वाक्शक्तिविकारः, तालुरोगः।

---

१. चरक संहिता सूत्रस्थान ११/५७

२. चरक सहिता सूथस्थान १०/९

३. सारावली ३/५-६ एवं ज्योतिषशास्त्रे रोग विचार पृष्ठ ७२ एवं जातक पारिजातः।

४. रोग एवं ज्योतिष।

६. गलरोगः–कण्ठरोगः, गण्डमाला इत्यादयः।

७. हस्तरोगः–लूलापन, हस्तकर्तनादि।

८. हृदयरोगः–हृदयशूल, हृदकम्प, रक्तचापादि।

९. उदररोगः–आमाशयविकारः, पक्वाशयविकारः।

१०. गुह्यरोगः–फिरङ्गरोगः, नपुंसकताः, अण्डकोशवृद्धिः, बन्ध्यत्वादि।

११. गुदारोगः–अर्शरोगः, गुदभ्रंशादि।

१२. पादरोगः–पादविकृतिः, पङ्गुता, जंधाक्षति आदि।

अनेन प्रकारेण ज्योतिषशास्त्रे रोगाणां विशिष्टं वर्गीकरणं वर्तते। वर्गीकरणेन प्रभावितग्रहोपायेन रोगाणां शान्तिः अवश्यमेव स्यादिति।

# वेदेषु वास्तुविज्ञानम्

**डॉ. देवबन्धुशर्मा**

**वास्तोष्पते प्रति जानीह्यस्मान्त्स्वावेशो अनमीवो भवा नः।**
**यत् त्वेमहे प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे॥**

भारतीयजीवनं सनातनकालादेवाध्यात्म-प्रणीतं वर्तते। धर्मजीवनयोः पारस्परिकता एव भारतस्य वैशिष्टयम्। अस्माकं संस्कृतेः मूलाधारो देवतत्त्वात्मको वर्तते। अस्य देशस्य एकमपि शास्त्रमेकाऽपि कला देवकल्पनया बिना न वर्तते नृत्यकलायां नटराजशिवस्य संगीतकलायां नाद-ब्राह्मणः आलेख्यकर्माणि जगन्नाथस्य पट्टचित्राणां यथा महत्त्वमस्ति तथैव वास्तुकलायां "वास्तु-ब्रह्म" राजते।

भारतीयवास्तुविद्याया [१]निर्दशनं सर्वप्रथमं वेदेष्वेव प्राप्यते। आधुनिकप्रासादस्य प्रादुर्भावः वैदिकयज्ञवेद्या एव अभवत्। स्तुतिप्रधाने यज्ञप्रधाने चिन्तनप्रधाने च वैदिकयुगेऽपि यज्ञवेदिनिर्माणाय वास्तुशास्त्रीयसिद्धान्तानां प्रयोगो भवति स्म।[२] अत एव अथर्ववेदस्योपवेदत्वेन स्थापत्यवेदस्य रचना अभवत्।

वास्तुशब्दो 'वस् निवासे' धातुना निष्पद्यते यस्यार्थः निवासयोग्यभूखण्डम्।[३] वेदेषु सुवास्तु[४] शब्दस्य प्रयोगः शोभन-गृहाय अवास्तु[५] शब्दस्य प्रयोगः गृहाभावार्थे प्राप्यते। यजुर्वेदीयसंहितासु वास्तुशब्दस्य प्रयोगः यज्ञवास्तुरूपेण वर्तते।[६]

विश्वसाहित्यस्य प्राचीनतमे ग्रन्थे "ऋग्वेदे" भवनविन्यासस्य या परम्परा वर्णिता तस्यां परम्परायां भवनानां मुख्यतया अङ्गत्रयमासीत्। प्रथमं गृहद्वारं द्वितीयमास्थानमण्डपं (अतिथीनां स्वागतकक्षः) तृतीयं पत्निसदनम्।[७] आर्यजना अग्न्याधानाय एकस्याच्छादितस्थानस्य प्रयोगं कुर्वन्ति स्म यस्य नाम "अग्निशाला" आसीत्।[८] ऋग्वेदे इन्द्रस्य कृते "स्कभीयान्"[९] शब्दोऽयं प्रयुज्यते यस्यार्थः सर्वश्रेष्ठस्तम्भस्य स्वामी। एकस्मिन् मन्त्रे सुदृढाधाराय स्तम्भत्रयाणां वर्णनं प्राप्यते।[१०] गृहस्य कृते वास्तु-शरण-शर्म-क्षय-

---

१. ऋग्वेदः - ७/५४/१
२. भारतीयस्थापत्यम्, पृ.-२१८
३. वाचस्पत्यम् भाग ६, आप्टे संस्कृतहिन्दीकोशः, पृ.-९२३
४. ऋग्वेदः - ८/१९/३६
५. अथर्ववेदः - १२/७/७
६. मैत्रायणी - १/५/११३, तैत्तिरीय-३/१/१०/३, वाजसनेयी-१६/३-९
७. भारतीयवास्तुकला का इतिहास, पृ. ३५
८. तत्रैव
९. ऋग्वेदः - १०/११/५
१०. तत्रैव - १/३४/२

वरुथ्य–सदन–दुरोणादिपदानि प्रयुज्यन्ते।[११] ग्रामशब्दस्य प्रयोगोऽपि बहुषु मन्त्रेषु दृश्यते।[१२] पाषाणनिर्मितदुर्गाणां लौहपुराणाञ्चोल्लेखो प्राप्यते।[१३] वैदिककाले अल्पसाधनसम्पन्नजनेभ्यः पाषाण–काष्ठादिनिर्मितगृहं साधनसम्पन्नजनेभ्यः विशालसुदृढगृहं निर्मीयते स्म।[१४] एकस्मिन् मन्त्रे मृण्मयगृहस्य सहस्रद्वार–युतगृहस्य परिकल्पना प्राप्यते।[१५] 'पुर' शब्दस्य प्रयोगः वैदिकयुगे 'दुर्ग' 'गढ' 'प्राकारस्यार्थे' क्रियते।[१६] ऋग्वेदे यज्ञवेदिमापनविषयकविवरणं प्राप्यते येन ज्ञायते यत् यज्ञवेदीनां रचना वर्गाकारा भवति स्म।[१७]

ऋग्वेदे[१८] अथर्ववेदे[१९] च गृहशब्दस्य प्रयोगः निवासार्थे क्रियते। यजुर्वेदे वास्तुशब्दस्य प्रयोगः यज्ञपरक एव वर्तते। तत्र शब्दोऽयं यूपनिर्माणाय[२०] स्तूपनिर्माणाय[२१] आसन्दपर्यंकादिनिर्माणाय च[२२] प्रयुज्यन्ते। अथर्ववेदस्य शालसूक्तेषु[२३] गृहस्य सम्पूर्णसौन्दर्यस्य पराकाष्ठायाः साम्यं सद्यविवाहितया सह क्रियते।[२४] शालाया निर्माणानन्तरं काम्यते यत् शाला अस्मभ्यं गोमती अश्वावती सुनृतावती ऊर्जस्वती घृतवती भूत्वा कल्याणकरी भवेदिति–

**इहैव ध्रुवा प्रतितिष्ठ शालेऽश्वावती गोमती सुनृतावती।**
**ऊर्जस्वती घृतवती पयस्वत्युच्छ्रयस्व महते सौभगाय॥**[२५]

ब्राह्मणग्रन्थेषु विशेषतया शतपथब्राह्मणे यूप–वेदि–श्मशानादीनां संरचनायां शिल्पसौष्ठमेव प्रतिबिम्बयते। यज्ञादिनां प्रसङ्गे चितिवर्णनमिष्टकानिर्माणश्च तत्र विस्तरेण वर्ण्यते।[२६] वास्तुविज्ञानस्य मूलाधारः स्थापत्यवेदः। अस्य विज्ञानस्य सर्वाधिकं सैद्धान्तिकवि वेचनमथर्ववेदे समुपलभ्यते।[२७] तत्र

११. तत्रैव – २/३/८, १/१५४/६, ६/१६/३३, १/१२१/२, ४/५३/६, ८/१०१/५
१२. तत्रैव – १/४४/१०, १/११४/१, १/१४०/१, २/१२/७
१३. तत्रैव – ४/३०/२०, ७/३/७, ७/६५/१, ७/१५/१४, १०/१०/८
१४. तत्रैव – ७/८९/१
१५. तत्रैव – ७/१/११
१६. भारतीयवास्तुकला का इतिहास, पृ. ३७
१७. ऋग्वेदः – १०/११४/३
१८. तत्रैव – ३/५३/६, ४/४९/६, ८/१०/१
१९. अथर्ववेदः – ७/८३/१, १०/६/४
२०. तैत्तिरीयसंहिता–१/३/६/३
२१. वाजसनेयी संहिता – ३/५
२२. तत्रैव – १९/८६, २०/१
२३. अथर्ववेदः – ९/३, ३/११
२४. तत्रैव – ९/३/२५
२५. तत्रैव – ३/१२/०२
२६. शतपथब्राह्मण – ७/१/२०, ६/१/२/२२, २३, २–९/
२७. भारतीयवास्तुकला के वैज्ञानिक आधार, पृ. १३

"पत्नीनां सदनस्योल्लेखो" वर्तते येन ज्ञायते यत् गृहे स्त्रीणां कृते विशेषकक्षाणां व्यवस्था भवति स्म।[२८] तत्रैव श्मशाननिर्माणे वास्तुशास्त्रीयसिद्धान्तानां प्रयोगोऽपि वर्ण्यते।[२९] शतपथब्राह्मणे श्मशानशब्दस्य प्रयोगः शवान्नार्थे श्मशान्नार्थे वा प्राप्यते।[३०] श्मशाननिर्माणाय सुशान्तस्य स्थलस्य चयनं तस्य स्थलस्य पार्श्वे अश्वत्थन्यग्रोधवृक्षयोः स्थितिः प्रशस्ता वर्णिता।[३१]

सूत्रग्रन्थेषु यज्ञवेदीनां निर्माणे शुल्वसूत्रग्रन्थानां वैशिष्ट्यं वर्तते। शुल्वशब्दस्यार्थ एव मापनकर्मणि प्रयुक्तः रज्जुः सूत्रं वा वर्तते।[३२] गृह्यसूत्रेषु भूमिचयन-भूशोधन-पूजनादिनां वर्णनं प्रतिपाद्यते। शांखायन-पारस्कर-आश्वलायन-गृह्यसूत्राणां गणना अस्यामेव श्रेण्यां भवति।[३३] वैदिककाले भवनस्य चतुर्दिक्षु रक्षाप्राचीरस्य परिकल्पना प्राप्यते।[३४] यूपशब्दस्य प्रयोगः स्तम्भस्य कृते वर्तते।[३५] यूपस्य प्रतिष्ठायाः पूर्वं तस्य स्तुतिः मन्त्रैः क्रियते स्म। वैदिकयूपानामेका परम्परा दीर्घकालं यावत् प्राप्यते। उत्कीर्णलेखैः ज्ञायते यत् वैदिकयुगे यज्ञाः दीर्घकालसम्पन्नाः बहुव्ययनिष्पन्नाश्च आसन्।[३६]

वेदेषु केषाञ्चन् वास्तुदेवानां वर्णनमपि प्राप्यते। ऋग्वेदस्य हिरण्यगर्भसूक्ते 'क' संज्ञकप्रजापतेः चर्चा चर्चिता। स एव द्यावापृथिव्योः निर्माणं कृतवान्।[३७] विश्वकर्मणः चर्चा त्वष्टया सह समुपलभ्यते[३८] यथा एकस्मिन् मन्त्रे–

**अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताग्रे।**
**तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे।।**[३९]

वास्तुसम्बन्धिदेवेषु त्वष्टादेवस्य शिष्याणां ऋभूगणानां वर्णनं प्राप्यते।[४०] गृहस्य रक्षकत्वेन वास्तोष्पतेः स्तुतिः बहुषु मन्त्रेषु प्राप्यते यथा–

**वास्तोष्पते शग्मया संसदा ते सक्षीमदि रण्वया गातुमत्या।**
**पाहि क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिः सदा नः।।**[४१]

---

२८. 'ए स्टडी आन वास्तुविद्या' - पृ. १३-१४
२९. अथर्ववेदः - २/११/१७, ८/३३/६, १०/३३/१
३०. शतपथब्राह्मण - १३/८/१//१
३१. भारतीयवास्तुकला का इतिहास, पृ. ४४
३२. वास्तुशास्त्रविमर्शः, पृ. ३
३३. शांखायन - ३/४/५, १, २, पारस्कर - ३/४, आश्वलायन-२/९/१०
३४. भारतीयवास्तुकला का इतिहास, पृ. ४१
३५. ऋग्वेदः - १०/११/१५
३६. भारतीयवास्तुकला का इतिहास, पृ. ४२
३७. ऋग्वेदः, हिरण्यगर्भसूक्त - १०/१२१
३८. वाजसनेयी संहिता - १२/६१
३९. तत्रैव - ३१/१७
४०. ऋग्वेदः - १/१८०/१, १/११९/१, १/११/१
४१. तत्रैव - ७/५४/३

# नीतिशब्दव्युत्पत्तिस्तन्मूलकोऽर्थश्च

**डॉ. हेतरामकछवाहः**

'नीति' शब्द स्त्रीलिङ्गः, व्युत्पत्तिश्च–"नीयन्ते प्राप्यन्ते लभ्यन्ते अवगम्यन्ते धर्मार्थकाममोक्षोपाया अनया अस्यां वेति नीतिः"। णीञ्–प्रापणे" इति धातोः प्रापणेऽर्थे 'णी' (नी) इत्यस्माद्–करणे–अधिकरणे वा क्तिन् प्रत्यये सति निष्पद्यते नीतिशब्दः। धर्मार्थकाममोक्षोपायसाधकोपायानां तथा च तेषां प्राप्त्युपायानां येन शास्त्रेण यस्मिन् शास्त्रे वा ज्ञानं भवति तच्छास्त्रं नीतिशास्त्रमिति। एतेन मानवजीवने लक्ष्यसिद्धये नीतिद्वारैव समुचितमार्गस्य निर्देशनं जायते। यदि मानवो नीतिमार्गमनुसरति तदा साफल्यमन्यथाऽसाफल्यं लभत इत्यनुभवसिद्धं लोकसिद्धञ्च।

एवं नीति–पदार्थः अनुचितमार्गेण जनम् उचितमार्गे सन्मार्गे वा प्रापणं नयनम् इयं प्रिया हि परमार्थतः नीतिपदेनोच्यते। अतः प्रथितमिदं वचनं नीतिशास्त्रे–'नयनान्नीतिरुच्यते।'[१] एतेन नीतितत्त्वस्य मूर्धन्योऽऽचार्यो भीष्मपितामहो महाभारते निर्दिशति–चातुर्वर्ण्यधर्मस्य विप्लवे तस्य प्रतीकारः राजा एव कर्तुं योग्य इति।[२]

किञ्च महर्षियाज्ञवल्क्यस्यायमेव निश्चयः।[३] अत इदं स्पष्टमेव यन्नीतिशब्दस्य प्रापणार्थपरः तस्य प्रापयिता मूलतो राजा एव भवति। अतएव नीतेर्व्युत्पत्तिलभ्योऽर्थः राज्ञा प्रजायाः नयमार्गे नयनम्, इदमेव तत्त्वम्–राजनीतिः राजधर्मो वा तत्र तत्र शास्त्रेषु प्रतिपादितं दृश्यते। अत्र राजनीतिरित्यस्य स्थाने राजधर्म इति प्रयोगे धर्मशब्दः न केवलं तत्तत्स्मृतिषु उच्चमानो धर्मो न, अपितु अत्र राजधर्मे धर्मशब्दः कर्तव्यपरः इति स्पष्टं निर्दिशति मनुस्मृतिः[४]।

---

१. दमो दण्ड इति ख्यातस्तस्माद्दण्डो महीपतिः।
तस्य नीतिर्दण्डनीतिर्नयनान्नीतिरुच्यते।। शुक्रनीतिः। १/५७

२. चातुर्वर्ण्यस्य धर्माश्च रक्षितव्या महीक्षिता।
धर्म–सङ्कर–रक्षा च राज्ञां धर्मः सनातनः।। म.भा.शा.प ५७/१५

३. कुलानि जातीः श्रेणीश्च गणान् जानपदानपि।
स्वधर्मान् चलितान् राजा विनीय स्थपयेत्पथि।। याज्ञवल्क्यस्मृतिः १/३६१

४. धर्म–शब्दश्च कर्त्तव्यता–वचनः मेधातिथिः।
धर्म–शब्दोऽत्र दृष्टाऽदृष्टार्थानुष्ठेय–परः।। कुल्लूकभट्टः मनुस्मृतिः ७/१

एवं नीतिशब्दस्य एवं व्युत्पत्तौ अपमार्गे गच्छतां जनानां (प्रजानां) ततो निवर्तनम्, अयमेव अनौचित्यपथाद् बलादपसार्य नयमार्गे नयितव्यः। इदं क्वचिद् भवितुमर्हति यदैकपक्षास्त्रतानां प्रजानां कृते विहितन्नास्ति, परमन्येषां कृते तत्र नयनं न नीतिविरोधः। प्रमाणरूपेणोदाहरणाय तपस्यां नेतुं शक्यते। तपस्या हि व्यक्तिगतरूपेण मोक्षपथारूढानां कृते आचरितव्यम्, परं सामान्यजनानां कृते संस्कारादिविहीनानां जनानां कृते कठिना तपस्या अनुचिता। अथ चान्यानि कार्याणि यानि सर्वथा नीतिविरुद्धानि सन्ति तानि नाचरणीयानि। यथा–चौर्यम्, परदारादिगमनमित्यादयः। अस्यायं विवेकः उचितानुचितविचारस्य यद् विशेषव्यक्तीनां कृते साध्यो भवेदन्येषाञ्चासाध्यं स्यात्, यथा–तपस्यादयः न समेषां कृते राज्ञा अनिवार्यरूपेण कर्तव्यो भवतु। अतः एकस्य कृते धर्मः अपरस्य कृते चाधर्मः इति नयमार्गेऽपि राज्ञा अधिकारिभेदेन तन्नीतेरनुसरणं प्रजायै कार्यम्।

यद्धि सर्वथा अनुचितं कार्यं यथा चौर्यं परदाराभिमर्शनमित्यादयः अज्ञानादासक्तिर्वशाद्वा जायते। अत्राऽयं निषेधः सार्वजनीनः। एवं यदि सज्जनाः अज्ञानादनुचितमाचरन्ति तदज्ञानमेव तत् कारणम्, न चासक्तिः, परम् आसक्तिवशात् स जनो यदि अनुचितमाचरति तदसज्जनकोटावेव परिगणितुं शक्यते। एवमनुचितमाचरणं राज्ञां कृते एवं सम्यक् परिशील्य जनाः दण्डनीयाः। निष्कर्षतः अनौचित्यस्यायमेव विवेकः राज्ञोपयुक्तः।

सार्वजनीनानौचित्यानामवरोधः राज्ञा उपायोऽवलम्बनीयः। स चोपायः मनु[५]–याज्ञवल्क्याभ्यां[६] चतुर्विधः स्थापितः, स च साम–दान–दण्ड–भेदात्। एते च भेदाः सहिता एव, किन्तु तदतिरिक्ता अन्येऽपि उपायाः राज्ञा आचरणीयाः, ते च माया, उपेक्षा, इन्द्रजालञ्च।[७] यद्यप्येते त्रिविधोपायाः न सार्वजनीनाः तथापि शत्रुराज्ञां वशीकाराय तत्त्वतः स्वीकृताः।

किञ्च राज्ञा व्यवहारनिर्वाहायापि नैतेषां त्रिविधोपायानां नूनं महत्त्वम्।[८] अपकारककोटौ राज्ञातिरिक्तः कोऽपि जनः यदि अपकारमाचरति स भवतु नाम परराजा स्वपुत्रो वा परं उभौ तौ शत्रुरूपावेव। एवमपकारकजनानां समेषां कृते यथा योग्या एतेऽपि उपायाः अवलम्बनीया एव।

इत्थं यथापराधं यथापराधिनं तत्तदुपायाः आचरणीया एव। इदन्तु सुस्पष्टमेव यदि कश्चित्

---

५. सामादीनामुपायानां चतुर्णाम्–मनुस्मृतिः ७/१०९

६. उपायाः साम दानञ्च भेदो दण्डस्तथैव च।। याज्ञवल्क्यस्मृतिः १/३४६

७. साम भेदः तथा दानं दण्डश्च मनुजेश्वर।
उपेक्षा च तथा माया इन्द्रजालं तथैव च। मत्स्यपुराणम् २२१/२
साम दानञ्च भेदश्च दण्डश्चेति चतुष्टयम्।
मायोपेक्षेन्द्रजालञ्च सप्तोपायाः प्रकीर्तिताः।। कामन्दकीयनीतिसारः १८/३

८. 'एते सामादयः न केवलं राज्य–व्यवहार–विषयाः अपितु सकल–लोक–व्यवहार–विषयाः।' मिताक्षरा, याज्ञवल्क्यस्मृतिः १/३४६

सज्जनः अज्ञानवशात् कुमार्गे मार्गान्तरे वा आचरणमाचरति तदा तस्य शमनं सामोपायमात्रेण कर्तुं शक्यते।[९] एवं दानभेदयोरपि प्रयोगो यथाऽवसरविहित एव। परम् आसक्तिपूर्वक दुर्जनं सन्मार्गे नयनाय नोपयुक्तः सामाद्युपायः[१०], तदर्थन्तु दण्ड एवोपायः समर्थः।[११] वाल्मीकिरामायणेऽपि एवमेव उक्तम्–

**न साम रक्षस्सु गुणाय कल्पते न दानमर्थोपचितेषु युज्यते।**
**न भेदसाध्या बलदर्पिता जनाः पराक्रमस्त्वेष ममेह रोचते॥**[१२]

एवं दण्डप्रयोगे विवेकोऽऽवश्यकः। प्रजासु अनुचितदण्डेन अपराधतोऽधिकतीक्ष्णदण्डेन वा आतङ्कः आक्रोशश्च विवर्धते। एवमेव यथापराधे न्यूने दण्डे राजा उपहासं याति। अतः राज्ञा दण्डप्रयोगे अत्यन्तविवेकिना भवितव्या। यथापराधे यथाविहितो दण्डः नूनं राज्ञां सम्माननाय जायते।[१३] सुहृद् वा असुहृद् वा भवतु विधानतः उभावपराधिनौ[१४] किञ्च महाकविना भारविना दण्डस्य कृते स्पष्टः व्याख्यायते–

**वसूनि वाच्छन्न वशी न मन्युना स्व-धर्म इत्येव निवृत्त-कारणम्।**
**गुरूपदिष्टेन रिपौ सुतेऽपि वा निहन्ति दण्डेन स धर्म-विप्लवम्॥**[१५]

---

९. तत्र साधुः प्रयत्नेन साम-साध्यो नरोत्तमः॥ मत्स्यपुराणम् २११/४

१०. साम्ना यद्यपि रक्षांसि गृह्णन्तीति परा श्रुतिः।
तथाप्येतदसाधूनां प्रयुक्तं नोपकारकम्॥ मत्स्यपुराणम् २२१/८

११. यदि ते तु न निष्ठेयुः उपायैः प्रथमैः त्रिभिः।
दण्डेनैव प्रसह्यैतान् शनकैः वशमानयेत्॥ मनुस्मृतिः ७/१०८
न शक्या ये वशे कर्तुमुपायत्रितयेन तु।
दण्डेन तान् वशीकुर्यात् दण्डो हि वशकृन्नृणाम्॥ मत्स्यपुराणम् २२४/१

१२. वाल्मीकिरामायणे सुन्दरकाण्डे ४१/३

१३. 'तीक्ष्णदण्डो हि भूतानामुद्वेजनीयः। मृदुदण्डः परिभूयते। यथार्हदण्डः पूज्यः। सुविज्ञातप्रणीतो हि दण्डः प्रजा धर्मार्थकामैर्योजयति। दुष्प्रणीतः कामक्रोधाभ्यामज्ञानाद्वानप्रस्थपरिव्राजकानपि कोपयति, किमङ्ग पुनर्गृहस्थान्।'
कौटिलीयार्थशास्त्रम् १/३
उद्वेजयति तीक्ष्णेन मृदुना परिभूयते। दण्डेन नृपतिस्तस्माद् युक्तदण्डः प्रशस्यते॥
त्रिवर्गं वर्धत्याशु राज्ञो दण्डो यथाविधि। प्रणीतोऽथासमञ्जस्याद् वनस्थानपि कोपयेत्॥
कामन्दकीयनीतितसारः २/३७-३८

१४. दण्ड शास्ति प्रजाः सर्वाः दण्ड एवाभिरक्षति।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः॥
म.भा. शा.प. १५/२, मत्स्यपुराणम् २२४/१४-१५, मनुस्मृतिः ७/१८
स्व-देशे पर-देशे वा धर्म शास्त्र-विशारदान्।
समीक्ष्य प्रणयेद्दण्डं सर्वं दण्डे प्रतिष्ठितम्॥ मत्स्यपुराणम् २२४/४

१५. किरातार्जुनीयम् १/१३

